॥ ॐ ॥

श्री विश्वनाथपञ्चाननभट्टाचार्यविरचिता स्वकृत-
कारिकावली व्याख्या

# सिद्धान्तमुक्तावली.

श्री गोविन्दरामसूनु पं. वंशीधरशर्मणा कृतयाऽन्वयार्थ-
दीपिकाख्यया व्याख्यया संवलिता.

भावनगरे
राजगुरुणा शास्त्रि जेठालालशर्मणा संशोधिता.

'सरस्वती' मुद्रायंत्रणे मुद्रापयित्वा प्रकाशिता च.
प्रत १०००



संवत् १९७३. सन १९१७.

। मूल्यं द्वादशाणकाः ।

## प्रथमत एव ग्राहकीभूयोपकारकारिणा-मुदाराशयानां नामानि प्रति संख्या च.



१५०) देशाई रतिलालभाई छोटालाल.

१००) रा. रा. प्रभाशंकरभाई दलपतराम पटणी.

६०) श्री जैनधर्म प्रसारक सभा. भावनगर.

५०) श्री आत्मानन्द सभा. ,,

६०) शेठ नरोत्तमदास भाणजी.

३०) शेठ चुनीलाल रतनजी.

३०) रा. भास्कररावभाइ विठलदासभाइ } मास्तर

२५) शेठ प्रेमचंद रतनजी } मोतीचंद झवेरचंद

१०) रा. बालुभाभाई पथुभाभाई } मारफत

२५) आनंदजी पुरुषोत्तम.

२५) शा हीरालाल अमृतलाल

२०) वोरा चंदुलाल पुनमचंद. पाटणवाळा.

पञ्चपप्रतिग्राहकाणां नामानि विस्तरभयान्न लिखितानि.



# शुद्धिपत्र.

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १ | कुत | कृत |
| २ | ८ | सिध्व | सिद्ध |
| ३ | ६ | वर्तमानाः | वर्तमाना |
| ३ | ७ | निर्णीतार्था | निर्णीता अर्था |
| ४ | ११ | कृत | कृतं |
| ४ | ११ | ऐतेन | एतेन |
| ६ | ८ | स्वर्गफलं | स्वर्गःफलं |
| ६ | १७ | गङ्गलं | मङ्गलं |
| ७ | २२ | हैतुत्वे सिद्धे | हेतुत्वे स्वीकृते |
| ९ | २४ | धर्म्मानवच्छिन्नत्वे | सर्वन्धानवच्छिन्नत्वे |
| १० | २९ | कर्तृत्वस्वरूपेश्वर | कर्तृस्वरूपेश्वर |
| ११ | २४ | पीश्वर | पीश्वरे |
| १३ | १७ | इति परेणान्वयः | इति कल्प्यत इति परेणान्वयः |
| १७ | २ | वा कार्य्यसमवायि | वा समवायि |
| २२ | १८ | दुपेक्षणीयत्व | दुपेक्षितत्व |
| २३ | २५ | प्रत्यक्षासिद्ध एव | सिद्ध एव |
| २९ | ९ | वपद्रूवान् | वद्रूपवान् |
| २७ | १३ | त्तत्काल | तत्काल |
| ३१ | १८ | थिन्नत्वेन | भिन्नत्वेन |

| | | | |
|---|---|---|---|
| ३४ | २ | नानुमितिकारण | नानुमितिकरण |
| ३५ | २ | प्रत्येव कारणता | प्रत्येवाकारणता |
| ३७ | १८ | मात्रपदप्रक्षेपापेक्षया | मात्रपदप्रक्षेपवत् |
| ३७ | १९ | लक्षण एव | लक्षणेऽपि |
| ३७ | २१ | तत्तद्भिन्नत्व | तत्तद्भिन्नत्वं |
| ३७ | २१ | सामान्यलक्षण एव | सामान्यलक्षणेऽपि |
| ३८ | ४ | तने | तेन |
| ३८ | ६ | क्वचिस्त्वसमवायि | क्वचित् स्वसमवायि |
| ४२ | ३ | असमवायिकारणत्व | असमवायिकारणत्वं |
| ५० | ७ | मुपन्थस्तम् | मुपन्यस्तम् |
| ५७ | ३ | तदनुमानात् | तदुन्नयनात् |
| ५८ | ५ | व्यंजकले | व्यंजकजले |
| ५८ | ८ | विषय इति | विषयमाह विषय इति |
| ५८ | २१ | हेतुत्रय एव विषय इतिग्रंथ— | हेतुत्रय एव ग्रंथक |
| ६० | ८ | श्रयोपाधि | श्रयौपाधि |
| ६० | १७ | नालिकेरजलस्या | नालिकेरजलवृत्तिरसस्या |
| ६० | २२ | वाम्लारसस्य | वाम्लादिरसस्य |
| ६१ | ७ | जलस्य | जलस्यैव |
| ६३ | १७ | मूचित | मूचितं |
| ६३ | १९ | नानुद्भतत्वं | नानुद्भूतत्वं |
| ६८ | ११ | रूपवद्रव्याभिघाते | रूपवद्द्रव्याभिघाते |
| ६९ | २१ | कष्ठ | कण्ठ |
| ७१ | १२ | मुदर्य | मूदर्य |

| | | | |
|---|---|---|---|
| ७२ | २१ | समवायिकारणत्व | सासमवायिकारणत्व |
| ७३ | ६ | ध्वंसेनोप | ध्वंसेनैवोप |
| ७६ | ५ | स्थीविरे | स्थविरे |
| ७६ | १० | स्मारकाभावात् | अनुभावकाभावात् |
| ७७ | १३ | भावस्वरूप | भावरूप |
| ८० | ७ | दुरूप | दुरूप |
| ८१ | २ | तदानंत्य | संस्कारानंत्य |
| ८४ | ६ | व्यापारांशेः | व्यापरांशः |
| ८९ | ५ | चैतन्यांशेऽपि भ्रमः | चैतन्यांशे भ्रमः |
| ९४ | २३ | मनुभवन्यून | मनुभवत्वन्यून |
| ९५ | १९ | यां काचि | यां कांचि |
| १०२ | २० | तयत्यर्थः | तयेत्यर्थः |
| १०३ | ६ | नीलत्वं पृथिवीत्वं च | नीलत्वं पृथिवीपरमाणौ पृथिवीत्वं |
| १०४ | २५ | पर्य्यवसिस्यत | पर्य्यवसितं |
| १०७ | ८ | वायौ रूपाभावः | वायौ उद्भूतरूपाभावः |
| १०७ | २२ | स्तंभामकतया | स्तंभात्मकतया |
| १०८ | १९ | सामान्य मत्या | सामान्यं मत्या |
| १०८ | २४ | विपयकं | विषयकं |
| १०९ | ३ | कपाले ज्ञातः | कपाले वा ज्ञातः |
| १०९ | ४ | तत्रेदं | अत्रेदं |
| १११ | १५ | ग्रह्यत्वा | ग्राह्यत्वा |
| १११ | २० | भवत्वत्व | भस्त्ववत्व |

| | | | |
|---|---|---|---|
| ११२ | १८ | गृहिता | गृहीता |
| ११८ | १५ | साध्यत्वे | साध्यके |
| १२० | १४ | सूचितोः | सूचितो |
| १२६ | १० | मेघानुमित | मेघानुमिते |
| १३० | ६ | तस्य | तस्या |
| १३२ | ८ | ज्ञानस्या | ज्ञानस्य |
| १३२ | १७ | वाद्धव्यः | बोद्धव्यः |
| १३३ | १४ | भिन्नत्वामत्यर्थः | भिन्नत्वमित्यर्थः |
| १३३ | २० | निश्चिय | निश्चय |
| १३३ | २५ | दकेहेत्वा | देकहेत्वा |
| १३७ | २ | सायध्कातु | साध्यकातु |
| १३७ | ५ | त्तावपयक | त्ताविषयक |
| १४१ | १ | सत्प्रविरुद्धसातिपक्षत्वेनाभिमतो | विरुद्धसा |
| १४१ | १ | कलिान | कालीन |
| १४१ | १४ | स्त्वं हेतुस्त | स्त्वं सत्प्रतिपक्षत्वेनाभिमतो हेतुस्त |
| १४२ | १४ | तद्भावे | पदाभावे |
| १४३ | २२ | तद्भाववति | तद्भाववति |
| १४३ | २४ | गंगदि | गंगादि |
| १४४ | ११ | तीर विषयताव | तीरं विषयताव |
| १४५ | १० | दनवाछिन्नस्यैक | दनवच्छिन्नाया एकस्या |
| १४६ | १३ | न्नत्वे सती | न्नत्वे च सती |
| १४७ | २४ | न ास्य | न स्या |
| १५० | ३ | शक्तेति | शक्येति |

| | | | |
|---|---|---|---|
| १५० | १७ | विनत्येर्थः | विनेत्यर्थः |
| १५० | २५ | ग्रएत्रमे ऽपि | एत्रमग्रे ऽपि |
| १५२ | २२ | भेद्नापि | भेदेनापि |
| १५८ | ५ | तात्पर्य | तात्पर्य्य |
| १५९ | १ | ब्धुद्धे | दूबुद्धे |
| १६९ | ८ | कत्वंत्वाभावात् | कत्वाभावात् |
| १६९ | ९ | नाशकं | नाशकत्वं |
| १६९ | ११ | मवधानस्य | मुपधानस्य |
| १६९ | १३ | भ्रमिद्वार | भ्रमिद्वारा |
| १६० | १० | दैकस्यैव | देकस्यैव |
| १६० | १४ | यसंबंधादकेन | यत्संबंधादेकेन |
| १६० | २० | उपलशत | उत्पलशत |
| १६४ | १२ | सांयेगस्य | संयोगस्य |
| १६५ | १३ | प्रतिघाते | अभिघाते |
| १६५ | १५ | संयोगो | संयोगे |
| १६७ | ८ | नाप्यत्राप्य | नाप्यन्याप्य |
| १६७ | १७ | द्रव्यादिरुपलंभ | द्रव्यादेरुपलंभ |
| १६७ | २३ | कौमल | कोमल |
| १७६ | २० | परिमाण | परिमाणं |
| १८० | १७ | विभागौ | विभागो |
| १८१ | २३ | संयोगोनुयोगी | संयोगानुयोगी |
| १८८ | ५ | ज्ञानभावात् | ज्ञानाभावात् |
| १८८ | २४ | दोषाधीनत्वादिति | दोषाधीनस्येति |

| | | | |
|---|---|---|---|
| १८९ | ९ | तकत्ल्यनात् | तत्कल्पनात् |
| १८९ | २१ | भावानिवार्य्य | भावादनिवार्य्य |
| १९१ | १ | विपक्षबाधक | विपक्षे बाधक |
| १९१ | ४ | र्तंतो | र्तंते |
| १९२ | २२ | यद्धर्म्मावच्छिन्ने | यद्धर्म्मावच्छिन्न |
| १९३ | १८ | साध्यवत्वेन | साध्याभाववत्वेन |
| १९९ | ५ | तेननांतरीयक | तेनांतरीयक |
| २०० | १ | साध्यत्वमकारः | साध्यत्वं मकारः |
| २०२ | २२ | जनकत्वादिति | जनकत्वादिति |
| २०३ | ८ | वाक्योपन्न | वाक्योत्पन्न |
| २०४ | ९ | बोधमानो | बोध्यमानो |
| २०४ | २४ | करणं | कारणं |
| २०४ | २४ | छसधनत्व | छसाधनत्व |
| २०६ | २ | या तादरूपा | या तादिरूपा |
| २०८ | ७ | नित्यामत्यर्थः | नित्यामित्यर्थः |



# सिद्धान्तमुक्तावली ।

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

---

अन्वयार्थदीपिका

श्रियं दिशतु नस्साक्षाच्छ्रीगणेशस्सनातनः ।
यस्य स्मरणमात्रेण विघ्ना नश्यन्ति दूरतः ॥ १ ॥

श्रीविश्वनाथकृतनिर्मलतर्कमुक्तावल्याः प्रणम्य शिरसा गुरुकाशिनाथम् ।
गोविन्दरामतनयेन विरच्यतेऽसौ वंशीधरेण विबुधेन नवीनटीका ॥ २ ॥

इह हि सर्वविद्वज्जनललामभूतः श्रीविश्वनाथपञ्चाननभट्टाचार्यस्स्वनिर्मितकारिकावलीं व्याचिख्यासुरारब्धपरिसमाप्तिप्रतिबन्धकविघ्ननाशासाधारणकारणमविगीतशिष्टाचारानुमितकर्तव्यताकं मङ्गलाचरणमुपशिक्षयन् महादेवं प्रार्थयते **चूडामणीत्यादिना** स्वाश्रयावच्छिन्नत्वसंबन्धेन भवत्वजातिमान् भवो नोऽस्माकं भव्याय क्षेमाय भवतु। श्लोके परिशेषं प्रथमैकवचनान्तं रूपत्रयं भवस्यैव विशेषणं। तत्राचूडामणिश्चूडामणिः कृत इति चूडामणीकृतश्चूडामणीकृतो विधुर्येन स तथोक्तः। एवमेवावलयं वलयं संपद्यत इति वलयीकृतो वासुकिस्सर्पविशेषो येन स तथोक्तः। लीलाताण्डवपण्डित इत्यस्य लीलायां यत्ताण्डवं नृत्यं तत्र पण्डितोऽभिज्ञ इत्यर्थः। अत्र भवतु भव्यायेत्यन्तेन वाक्यसन्दर्भेण जनितविवक्षितान्वयबोधस्य विशेष्यवाचकभवशब्दस्य लीलेत्यादिविशेषणवाचकपदान्तरान्वयार्थं पुनरनुसन्धानाज्जनितविवक्षितान्वयबोधस्य विशेष्यवाचकपदस्य विशेषणांतरान्वयार्थं पुनरनुसन्धानत्वलक्षणकस्समाप्तपुनरात्तत्वनामकः काव्यदोष इति तु न भ्रमितव्यं, यतो लीलेत्यादिविशेषणानुक्तौ किमर्थं विधोश्चूडामणीकरणं किमर्थं वा वासुकेर्वलयीकरणमित्युत्थिताकांक्षायां विवक्षितान्वयबोधस्यैवासंभवात्। तथा चाभूषणरहितस्य नृत्यासंभवेन विध्वादीनां चूडामण्या-

निजनिर्मितकारिकावलीमतिसांक्षिप्तचिरंतनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥
सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

---

दिकरणमितिभावः । एवं " विशेषणं विशेष्येण बहुल " मितिपाणिनीयसङ्केतसिध्यनीलोत्पलमित्यादौ तथैव दर्शनाल्लुब्धया जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां मध्ये जातिप्रवृत्तिनिमित्तकस्यैव मुख्यविशेष्यत्वमिति व्युत्पत्त्या योगाद्रूढेर्बलीयस्त्वमितिन्यायेन च भवत्वजातिविशिष्टस्यैव वाचको भवशब्द एव मुख्यविशेष्यो भवति न तु लीलेत्यादिक इत्यपि द्रष्टव्यं सुहृद्भिः ॥

संप्रति इतरग्रंथपठनेच्छानिरासपूर्वकप्रकृतग्रंथपठनेच्छारूपशिष्यावधानाय द्वितीयश्लोकं निर्वक्ति **निजेति** निजेन स्वेन निर्मिता रचिता या कारिकावली तां अति अत्यन्तं संक्षेपः शब्दसंक्षेपो यासु तास्तादृश्यः चिरन्तनानां कणादप्रभृतीनामुक्तय उक्तिप्रतिपाद्ययुक्तयस्ताभिरहं विशदीकरवाणि प्रकटीकरोमीत्यर्थः। अत्र चिरंतनेति कथनेन स्वकपोलकल्पनारचितत्वदोषोऽपि निवारितो भवतीति बोद्धव्यं । ननुशब्दश्चात्रावधारणे कौतुकादनायासादेवेत्यर्थः । राजीवे स्वशिष्ये या दया तया वशंवदस्तदधीन इत्यर्थः। एतेन स्वस्य ग्रन्थकरणे प्रवृत्तौ निमित्तं सूचितं । एतेनातिपण्डितेन मया स्वशिष्योपरि दयां कृत्वा कणादादिसूक्ष्मतरमतमवलंब्य स्वनिर्मितकारिकावलीप्रतिपादितपदार्था एव सुगमतया प्रतिपादिता इत्यत इयमेवावश्यं पठितव्येत्यपि सूचितं ॥

संप्रति श्रोतृप्रवृत्तिनिमित्तभूतसंबन्धविषयप्रयोजनाधिकारिप्रदर्शनपूर्वकमस्य ग्रंथस्य सकलपदार्थनिरूपकत्वं ईश्वरार्पणेन सर्वसाधारण्यं " यत्करोषी"-त्यादिभगवदुक्तेर्मुक्तावलीसदृशप्रकृतग्रंथस्यभगवत्यर्पणेन स्वस्य निष्कामकर्मकर्तृत्वं च प्रदर्शयन् तृतीयश्लोकमाह श्रीविश्वनाथः—**सद्द्रव्येति** द्रव्यैः पृथिव्यादि-

भिर्युक्ता प्रतिपादकतासम्बन्धेन द्रव्यवतीत्यर्थः । एवं गुणैः रूपादिभिरपि गुम्फिता युक्ता । तथा सतां युक्तिसिद्धानामुत्क्षेपणादिकर्म्मणां ज्ञापिका बोधिकेत्यर्थः । तथा संति विद्यमानानि प्रतिपादकतयेति शेषः, सामान्यविशेषनित्यमिलितानि यस्यां सा नित्यमिलितं नित्यसंबन्धः समवाय इतियावत् अभावस्य प्रकर्षः प्रागभावादिभेदेन वैलक्षण्यं तेन उज्ज्वला दीप्ता तस्य बोधिकेतियावत् । एषा तत्त्वरूपतया मद्बुद्धौ वर्तमानाः सिद्धान्ता वादिप्रतिवादिभ्यां निर्णीतार्था एव मुक्ता मौक्तिकसदृशास्तासामावली पङ्क्तिरिव मुक्तावली । विश्वनाथकृतिना विश्वनाथनाम्ना कविना विष्णोर्नारायणस्य वक्षसि वक्षःस्थले विन्यस्ता विशेषेणार्पिता (सती) सुकृतिनां पण्डितानां मनसो मुदं संतोषं चिरं बहुकालं वितनुतां विस्तारयत्वित्यर्थः । युक्तिसत्त्वे एव विदुषां मुद्भवतीत्यत आह—सद्युक्तिः सत्यः परैरबाधिता युक्तयो यस्यां सा तथोक्ता यथा मौक्तिकमाला द्रव्यादिपदार्थवती तथा प्रकृतग्रंथोऽपीति मुक्तावलीसादृश्यं प्रकृतग्रंथस्य । तथाहि—मुक्तावली सद्रव्या अनेकविधमण्यादिद्रव्यसहिता गुणेन सूत्रेण गुम्फिता निर्मिता सुकृतिनां पुण्यवतां यानि संति समीचीनानि भगवद्भजनादीनि कर्म्माणि तेषां बोधिका । सत्सामान्यं समीचीनां जातिर्विशेषो महत्त्वनैर्मल्यादिस्ताभ्यां नित्यं अनवरतं मिलिता संबद्धा। अभावे तेजोऽभावेऽन्धकारे सति प्रकर्षेणोज्ज्वला अर्थप्रकाशिकेतियावत् । विश्वस्य नाथो महाराज एव कृतिः पुण्यवान् तेन विष्णोर्वक्षसि विन्यस्ताऽर्पिता । सद्युक्तिः शोभनगुंथनप्रकारा । एतेन यथा शोभनग्रंथनप्रकारा मुक्तावली भवति तथायमपि ग्रंथ उद्देशलक्षणपरीक्षाद्वारा सम्यगेव रचित इति ध्वनितं। एतत्पद्यवर्तिनां केषांचित्पदानामितरथापि व्याख्या दिनकर्यां दृश्यते तथापि तस्यास्सदोषत्वेन दिनकरेणैवोपेक्षितत्वान्नेह प्रपञ्च्यते । यथा मुक्तावली द्रव्यादिसकलपदार्थवती तथायं ग्रंथोऽपीति मुक्तावलीसादृश्यं । अत्र मुक्तावलीसादृश्यप्रतिपादनेन यथा मुक्तावली निर्दोषा भवति तथायं ग्रंथोऽपीति सूचितम् ।

॥ श्रीगणेशाय नमः ॥

# कारिकावली ।



**नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।**
**तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥१॥**

**विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति-नूत-**

---

अत्र द्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेन द्रव्यादयो विषया उक्ताः । पदार्थतत्त्वावधारणं च प्रयोजनमर्थात् सूचितं । प्रतिपाद्यप्रतिपादकभावश्च संबन्धः पदार्थतत्त्वावधारणकामश्चाधिकारीति ॥

संप्रति स्वसिद्धान्तानुसारेण मङ्गलकरणस्य ग्रन्थादौ तन्निबन्धनस्य च प्रयोजनं दर्शयति—**विघ्नविघातायेति** विघ्नः ( कार्य ) समाप्तिप्रतिबंधकोऽदृष्टविशेषः, स च नानाविधस्तस्य विघातो नाशस्तस्मै कृतं । एतेन ग्रंथादौ मङ्गलकरणप्रयोजनं दर्शितं भवति । मंगं विघ्नं लुनातीति मङ्गलं । **शिष्यशिक्षायै** शिष्याणां या शिक्षा मङ्गलकरणे इच्छा तस्यै तत्संपादनायेत्यर्थः । मन्मङ्गलं **दृष्ट्वा** शिष्या अपि मङ्गलं कुर्य्युरित्याकारकेणाभिप्रायेणेति भावः । **निबध्नाति** ग्रन्थानुपूर्वकोटौ प्रवेशयति श्रीविश्वनाथः । अत्र गद्ये " वि "पदस्यानर्थक्यशङ्का तत्परिहारश्च दिनकर्यां प्रतिपादितो न चेह ग्रंथभूयस्त्वभयात्प्रपञ्च्यते । अत्रैवं प्रक्रिया बोध्या—प्रथमतो नास्तिकः शङ्कते ननु मङ्गलं न कर्तव्यं, निष्फलत्वात् , पश्वादिविहितजलताडनादिवत् । सैद्धान्तिकः प्राह—ननु मङ्गले निष्फलत्वमेवासिद्धं । पुनर्नास्तिको वदति—मङ्गलं निष्फलं, फलविशेषाभावकूटवत्त्वात् , यद्यद्विशेषाभावकूटवत्तत्तत्सामान्याभाववद्भवति, यथा नीलपीतादिसहाविधघटाभाववद्भूतलं घटसामान्याभाववद्भवतीति सामान्यव्याप्त्या मङ्गले निष्फलत्वं सिध्यत्येव । ननु मङ्गले विघ्नध्वंसरूपस्य

**नेत्यादि, ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेन्न। अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात्**

---

समाप्तिरूपस्य वा फलस्य विद्यमानत्वात्फलविशेषाभावकूटवत्त्वादिति हेतुः स्वरूपासिद्ध इति सैद्धान्तिकवचनं श्रुत्वा नास्तिकः शङ्कते—**नन्विति** नन्वित्याशङ्कायां, मङ्गलं न विघ्नध्वंसं प्रति कारणं, न वा समाप्तिं प्रति कारणं, अत्रानुमानप्रयोगश्चेत्थम्—मङ्गलं न विघ्नध्वंसं प्रति कारणं, अन्वयव्यभिचाराद्व्यतिरेकव्यभिचाराद्वा, पाषाणादिवत्। एवं मंगलं न समाप्तिं प्रति कारणं अन्वयव्यभिचाराद्व्यतिरेकव्यभिचाराद्वा पाषाणादिवदेवेति। अन्वयव्यभिचारश्च कार्याभावाधिकरणवृत्तित्वं, व्यतिरेकव्यभिचारत्वं च कार्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वं। अत्रान्वयव्यभिचारज्ञानस्य अन्यथासिद्ध्युपस्थापकत्वेन व्यतिरेकव्यभिचारज्ञानस्य च कारणताघटकीभूतनियमांशग्रहप्रतिबन्धकत्वेन कारणत्वज्ञानविघटकत्वमित्यग्रे स्फुटीभविष्यतीति दिक्। व्यतिरेकव्यभिचारमेव प्रकटयति—**विनापीति**। समाप्तिदर्शनात् विघ्नध्वंसपूर्वकसमाप्तिदर्शनादित्यर्थः। **अविगीतेति** अविगीतो बलवदनिष्टाजनको यः शिष्टानां फलसाधनतांशे भ्रान्तिशून्यपुरुषाणामाचारः कृतिस्तद्विषयत्वात्तद्विधेयत्वादित्यर्थः। तेन समाप्त्यादिरूपे फले न व्यभिचारः। सफलत्वे सिद्धे अनुमित इत्यर्थः। अत्रानुमानप्रकारश्च—मङ्गलं सफलं, अविगीतशिष्टाचारविषयत्वात्, सत्यभाषणादिवत्। अत्र मंगले प्रवृत्त्युपयोगिसफलत्वं साध्यं, तच्च बलवदनिष्टाननुबन्धित्वरूपमिति बोद्धव्यं। **तत्र** मङ्गले, **फलजिज्ञासायां** विशेषतः फलजिज्ञासायां, दृष्टफलकत्वे संभवति सति अदृष्टफलकल्पनाया अन्याय्यत्वात् समाप्तिरेव फलं कल्प्यते इति योजना। अयमाशयः—फलं द्विविधं भवति, दृष्टमदृष्टं च। तत्र दृष्टफलकत्वे संभवति सति अदृष्टफलकल्पनं लोकन्यायविरुद्धं, यथा भोजनादेः तृप्तिरूपदृष्टफलस्य सत्त्वान्न तत्र स्वर्गादिरूपादृ-

**उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते । इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते, यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यं, प्रचु-**

---

ष्टफलं कल्प्यते । गङ्गास्नानादीनां तु विजातीयदृष्टफलासंभवेनादृष्टफलकल्पनं न्याय्यं । इह च मंगले समाप्तिरूपदृष्टफलस्य सम्भवाददृष्टफलकल्पनं न लोकन्यायसिध्धमिति । ननु "स स्वर्गः सर्वान्प्रत्यविशिष्टत्वादिति" जैमिनीयसूत्रेण सफलस्य यस्य विश्वजिदादियागस्य किञ्चित्फलं न प्रमाणसिद्धं भवेत्तस्य स्वर्गफलं न्यायात्सिद्धं भवतीति सिद्धान्तितं तद्वदिहापि कथं न स्वर्ग एव फलं कल्प्यत इत्यत आह—**उपस्थितत्वादिति** ग्रंथादौ प्रवृत्तपुरुषकामनाविषयत्वेन समाप्तेः परिशेषानुमाने प्रवर्तमानस्य उपस्थितत्वादित्यर्थः, समाप्तिरेव फलं कल्प्यते अनुमीयते परिशेषानुमानविषयीक्रियत इत्यर्थः । अनुमानस्वरूपं च—मङ्गलं समाप्तिफलकं, समाप्त्यन्याफलकत्वे सति सफलत्वात्, यद्यदन्याफलकत्वे सति सफलं तत्तत्फलकं, यथा स्वर्गान्याफलकत्वे सति सफलो ज्योतिष्टोमः स्वर्गफलक इति । एतल्लक्षणं च प्रसक्तप्रतिषेधे अन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः परिशेषस्तदेवानुमानमिति । पूर्वोक्तव्यतिरेकव्यभिचारं निवारयति **इत्थं चेति** मंगलस्य समाप्तिहेतुत्वे सिद्धे च, यत्र नास्तिकादिग्रंथेषु सत्यामपि समाप्तौ मङ्गलं न दृश्यते, **तत्रापि** नास्तिकादिग्रंथेष्वपि जन्मान्तरीयं **तत्** मंगलं **कल्प्यते** अनुमीयते कार्य्यरूपसमाप्तेरिति शेषः तत्स्वरूपं च नास्तिकग्रंथः मङ्गलवान्, समाप्तिमत्वात् ,भारतादिवत्।संप्रत्यन्वयव्यभिचारं निरस्यति—**यत्र चेति** यत्र च कादम्बर्यादौ च । तत्र कादम्बर्यादौ । बलवत्तरत्वरूपवैजात्यकल्पने गौरवादाह **विघ्नप्राचुर्यं वेति** । ननु तथापि कादम्बर्यादौ कुतो न विघ्नध्वंस इत्यत आह—**प्रचुरस्येति** अस्य मंगलस्यैव बलवत्तरविघ्ननिवारणे बलवत्तरादिविघ्ननिवारणे कारणत्वात्, तेन प्रचुरस्यापि संग्रहः । वस्तुतस्तु बलवत्तरत्वरूपवैजात्यकल्पने गौरवात्तत्पक्षस्य पूर्वं ग्रन्थकृतैवोपेक्षितत्वेनात्र बलवत्तरशब्दस्य प्राचुर्य एव तात्पर्यमिति सुविचारणीयं सुहृद्भिः।

**रस्यास्यैव बलवत्तरविघ्ननिराकरणकारणत्वं, विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः ॥ नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्। न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम् । इष्टापत्तेः,**

---

तथा च कादम्बर्यादावपि यत्किञ्चिद्विघ्नध्वंसस्तु जात एव, समाप्त्यभावस्तु प्रतिबन्धकसंसर्गाभावविधया यावद्विघ्नाभावस्यापि समाप्तिहेतुत्वेन तत्र मङ्गलसत्वेऽपि यावद्विघ्नाभावरूपकारणान्तरासत्वादेवेति नान्वयव्यभिचारोऽस्तीति भावः । अत्र च केचित् विघ्नसमसंख्याकमंगलत्वेन नाशकतया न तत्र विघ्ननाश इत्यादि व्याख्यान्ति, तस्य च यथा सदोषत्वं तथान्यत्र स्वयमेवावसेयं महद्भिः, नेह प्रपञ्च्यते, ग्रन्थभूयस्त्वभयादिति । ननु शब्दादिरूप— मङ्गलस्य तृतीयादिक्षणे नाशात्समाप्तेश्च चिरकालसाध्यत्वात् व्यवहितयोस्तयोः कथं कार्य्यकारणभाव इत्यत आह—**विघ्नध्वंसस्त्विति** स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेनात्मनि जायमानां समाप्तिं प्रति स्वजन्यविघ्नध्वंसवत्त्वसंबन्धेन मङ्गलं कारणमित्यर्थः । तथा चैतत्सम्बन्धेन कालान्तरेपि मङ्गलसत्वान्न मङ्गलस्य तृतीयादिक्षणे नाशसत्वेऽपि क्षतिरिति भावः । **इत्याहुः प्राञ्चः** आहुरित्यस्वरससूचनाय, तथाहि-भोगादिजन्यविघ्नध्वंसपूर्वकसमाप्तौ क्लृप्तनियतपूर्ववृत्तिकेन ध्वंसेनैव मङ्गलस्थलीयसमाप्तेरपि सिद्धौ मङ्गलस्यान्यथासिद्धत्वमित्यन्यत्र विस्तरः । संप्रति चिन्तामणिकृतां मतमाह—**नव्यास्त्विति** विघ्नध्वंस एव फलं न तु समाप्तिरित्येवकारार्थः, विघ्नध्वंसमुद्दिश्यैव मङ्गलकरणमिति भावः । ननु समाप्तिस्तर्ह्याकस्मिकी स्यादत आह—**समाप्तिस्त्विति** बुद्धिर्ज्ञानं, प्रतिभा तद्विशेषः कल्पनेति यावत् , आदिपदेन विघ्नात्यन्ताभावादीनां परिग्रहः । **न चैवमिति** एवं मंगलस्य विघ्नध्वंसहेतुत्वे सिद्धे स्वतःसिद्धविघ्नविरहवता विघ्नात्यन्ताभाववतेत्यर्थः, पुरुषेण कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति न च वाच्यं, इष्टापत्तेः, अर्थात् येयमापत्तिर्भवता दीयते नेयमापत्तिः किन्त्वस्माकमिष्टमेव । ननु तस्य निष्फलत्वे प्रवृत्तिरेव कथमत आह—

विघ्नशङ्कया तदाचरणात् । तथैव शिष्टाचारात् । न च तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यं, सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् । अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम् । मङ्गलं तु (च) विघ्नध्वंसविशेषे कारणं विघ्न-

---

**विघ्नशङ्कयेति** संशयनिश्चयसाधारणविघ्नज्ञानमेव प्रवर्तकमितिभावः । **तदाचरणात्** मङ्गलाचरणादित्यर्थः । ननु विघ्नसंशये प्रवृत्तिरेवासम्भविनी, नहि सन्दिग्धं कर्म्म कुर्वन्ति शिष्टा अत आह—**तथैवेति,** शिष्टाचारात् मङ्गल इतिशेषः । यद्यप्यन्यविषये शिष्टानां संशयात्प्रवृत्तिर्न दृष्टचरी तथापि मङ्गले संशयनिश्चयसाधारणविघ्नज्ञानादेव कृषिबलानां कृष्यादाविव शिष्टप्रवृत्तिरितिभावः। ननु स्वतस्सिद्धविघ्नविरहवत्पुरुषानुष्ठितमङ्गलस्थलेऽन्वयव्यभिचारेण विघ्नध्वंसं प्रति मङ्गलस्य कारणता बाधिता, बाधितार्थबोधकत्वाच्च मङ्गलविघ्नध्वंसयोः कार्यकारणभावबोधकवेदस्याप्रामाण्यं स्यादत आह—**न च तस्येति** तस्य स्वतःसिद्धविघ्नविरहवत्पुरुषानुष्ठितमङ्गलस्य निष्फलत्वे सति तद्बोधकवेदाप्रामाण्यापत्तिः मङ्गलविघ्नध्वंसयोः कार्यकारणभावबोधकवेदस्याप्रामाण्यापत्तिरित्यर्थः । **सतीति** विघ्ने सत्येव तन्नाशस्य विघ्ननाशस्य वेदबोधितत्वात् । यथेतरसामग्र्यभावेन केवलदण्डाद्घटानुत्पत्तावपि स्वरूपयोग्यत्वरूपकारणतामादायारण्यस्थदण्डसाधारणस्य दण्डो घटकारणमिति दण्डे घटकारणताबोधकव्यवहारस्य नाप्रामाण्यं, तथेहापि च विघ्नरूपकारणान्तराभावेन विघ्नध्वंसानुदयेऽपि स्वरूपयोग्यत्वरूपकारणताया मङ्गले सत्त्वेनाबाधान्न कारणताबोधकवेदस्याप्रामाण्यमिति भावः । स्वरूपयोग्यत्वफलोपधायकत्वरूपकारणताद्वैविध्यस्य च तत्त्वमग्रे स्फुटीभविष्यति । तत्र दृष्टांतमाह **अत एवेति** नाशं प्रति प्रतियोगिनः कारणत्वादेव । **न तद्बोधकवेदाप्रामाण्यमिति** प्रायश्चित्तस्य पापनाशकत्वबोधकवेदस्य नाप्रामाण्यमित्यर्थः । ननु मङ्गलं न विघ्नध्वंसे कारणं विनायकस्तवपाठादिजन्यविघ्नध्वंसे व्यभिचारादत आह—**मङ्गलं चेति** । यद्यपि मङ्गं लुनातीति व्युत्पत्त्या विघ्ननाशकमात्रस्यैव मङ्गलपदवाच्यत्वं प्रतीयते तथापि ज्ञानक्रियाशब्दरूपविघ्न-

**ध्वंसविशेषे च विनायकस्तवपाठादि। क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात्।**

---

नाशके एव शिष्टानां मङ्गलशब्दप्रवृत्तिर्दृश्यते, अतस्तत्रैव मङ्गलपदस्य रूढित्वेन स्तवपाठस्य च कण्ठताल्वाद्यभिघातसंयोगरूपस्य न तथात्वमिति बोध्यम्। विनायकस्तवपाठादिरित्यादिना भोगादिपरिग्रहः। तथा चेदं पर्यवसितं—विजातीयविघ्नध्वंसं प्रति मङ्गलं कारणं, विजातीयविघ्नध्वंसं प्रति च गणेशस्तवपाठादिरिति। संप्रत्याहुरित्यनेन प्राचीनमते सूचितामन्यथासिद्धिं प्रकटयति—**क्वचिच्चेति** स्वतःसिद्धविघ्नविरहस्थले विघ्नात्यन्ताभाव एव समाप्तिसाधनं समाप्त्यव्यवहितपूर्ववर्तितया विघ्नात्यन्ताभाव एव निश्चितः, न तु विघ्नध्वंसादिरित्येवकारार्थः। तथा च तेनैव मङ्गलस्थलीयसमाप्तेरपि सम्भवेन सर्वत्र विघ्नात्यन्ताभाव एव समाप्तिसाधनं मङ्गलविघ्नध्वंसयोस्तु समाप्तावन्यथासिद्धत्वमित्यर्थः। ननु प्रतिबन्धकसंसर्गाभावत्वेनैव लाघवात्कारणत्वमस्त्वत आह—**प्रतिबन्धकेति** प्रतिबन्धकतावच्छेदकसंसर्गावच्छिन्नप्रतियोगिताकप्रतिबन्धकाभावस्यैव कार्य्यजनकत्वादित्यर्थः। अयमाशयः—यदि सामान्यतः प्रतिबन्धकसंसर्गाभावस्य कारणत्वं स्यात्तदा प्रतिबन्धकसत्त्वेऽपि संबन्धान्तरावच्छिन्नप्रतियोगिताकप्रतिबन्धकाभावस्यापि सत्त्वेन सर्वत्र कार्योत्पादप्रसंगः स्यात्, यथा प्रकृते समवायेनात्मनि विघ्नसत्त्वदशायामपि कालिकादिसंबन्धावच्छिन्नप्रतियोगिताकविघ्नाभावस्यापि सत्त्वेन समाप्त्यापत्तिः, अतो येन संबन्धेन वर्तमाना विघ्नाः कार्यं विघटयन्ति स संबन्धः प्रतिबन्धकतावच्छेदकसंबन्धः, तत्संबन्धावच्छिन्नप्रतियोगिताकप्रतिबन्धकाभावस्यैव कार्य्यजनकत्वं वाच्यं। प्रकृते च तादृशः संबन्धः समवायः। तथा च समवायसंबन्धावच्छिन्नप्रतियोगिताकविघ्नाभावः समाप्तिकारणमिति स्थितं। तादृशोऽभावश्च विघ्नात्यन्ताभाव एव, अन्योन्याभावप्रतियोगितायास्तादात्म्यसंबन्धावच्छिन्नत्वेन ध्वंसादिप्रतियोगितायाश्च किञ्चिद्धर्मानवच्छिन्नत्वेनैव सिद्धान्तितत्वात्। यद्यपि प्राचां मते ध्वंसप्रागभावयोरप्युत्तरकालपूर्वकालावेव प्रतियोगितावच्छेदकसंबन्धावित्यादिकं

**इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतःसिद्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः ॥ संसारेति । संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः। एतेन ईश्वरे प्रमाणमपि दर्शितं भवति। तथाहि यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः। न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन स-**

---

दीधित्याशयं प्रकटयद्भिर्जगदीशादिभिः प्रतिपादितं, तथापि समवायसंबन्धावच्छिन्नप्रतियोगिता तु सर्वेषां मते अत्यन्ताभावस्यैवेति तत्त्वम्। **इत्थं चेति** विघ्नात्यन्ताभावस्य समाप्तिहेतुत्वे सिद्धे चेत्यर्थः। **जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः** दुरितध्वंससामग्रीप्रयुक्तात्यन्ताभाव इत्यर्थः। दुरितध्वंसकल्पने तज्जनकीभूतमङ्गलकल्पने च गौरवादाह—**स्वतःसिद्धेति**। न व्यभिचारः नास्तिकादिग्रन्थेष्विति शेषः। मूले **नूतनेति** नूतनश्चासौ जलधरस्तस्य रुचिरिव रुचिर्यस्य स तस्मै। गोपेति गोपानां वधूटयो नवीनविवाहिताः स्त्रियस्तासां दुकूलानि तेषां चौराय। एतेन भगवतः भक्तवात्सल्यं सूचितं। अथवा गां पृथिवीं पांतीति गोपा राजानो युधिष्ठिरादयस्तेषां वधूटयः द्रौपद्यादयस्तासां दुकूलानि तेषां चौराय दात्रे इत्यर्थः। चुरधातोर्दानार्थकस्यापि दृष्टत्वात्। तस्मै सकलजनप्रसिद्धाय कृष्णाय परब्रह्मणे नमः। ननु कृष्णसत्त्वे किं मानमत आह—**संसारेति** संसारस्य महीरुह इति षष्ठीतत्पुरुषभ्रमं वारयितुमाह मुक्तावल्यां—**संसार एवेति**। बीजपदस्य लोके समवायिकारणपरत्वादाह—**निमित्तकारणायेति**। **एतेनेति** संसारमहीरुहस्य बीजायेति कथनेन। प्रमाणमनुमानरूपं प्रमाणमित्यर्थः। अनुमानस्वरूपं तु—क्षित्यङ्कुरादिकं कार्य्यं कर्तृजन्यं, कार्य्यत्वात्, घटवदिति। अत्र पक्षतावच्छेदकं कार्य्यत्वमेवेति बोद्धव्यमन्यतो, नेह प्रपञ्च्यते, प्रायेणार्थमात्रप्रदर्शनपरत्वादेतत्प्रयत्नस्य। **तत्कर्तृत्वमिति** क्षित्यङ्कुरादिकर्तृत्वमित्यर्थः। **तत्कर्तृत्वेनेति** क्षित्यङ्कुरादिकर्तृत्वेन। **ईश्वरसिद्धिः** जगत्कर्तृत्वरूपेश्वरसिद्धिरित्यर्थः। अस्मिन्विषये

त्प्रतिपक्ष इति वाच्यम्, अप्रयोजकत्वात्। मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव अनुकूलतर्कः। " द्यावाभूमी जनयन्देव एकः " " विश्वस्य कर्ता भुवनस्य गोप्ता " इत्यादय आगमा अप्यनुसंधेयाः ॥ १ ॥

पदार्थान्विभजते—

---

अधिकं तु कुसुमाञ्जल्यादावस्मत्कृतजगत्कर्तृत्वमंडने वावसेयम् । **न चेति** कर्त्रजन्यत्वसाधकेन शरीराजन्यत्वेन हेतुना सत्प्रतिपक्ष इति न च वाच्यमिति योजना । अयमाशयः—साध्याभावसाधकं हेत्वन्तरं यस्य भवति स हेतुः सत्प्रतिपक्षित इत्युच्यते । प्रकृते च सिद्धान्तिनां साध्यं कर्तृजन्यत्वं तस्याभावः कर्त्रजन्यत्वं तत्साधको हेतुः शरीराजन्यत्वमिति सिद्धान्तिनां कार्यत्वरूपो हेतुः सत्प्रतिपक्षितः इति । वादिप्रयुक्तानुमानस्वरूपं तु—क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वादाकाशादिवदिति । अप्रयोजकत्वादिति अनुकूलतर्काभावादित्यर्थः । इदमत्र हृदयं—यदि कदाचिद्धेतौ व्यभिचारशङ्का भवेत्तदा सा विपक्षे बाधकतर्कादपनेया भवति, यथा नन्वस्तु धूमो मास्तु वह्निरित्याशङ्का यदि स्यात्तदा यदि वह्निविरहिण्यपि धूमो भवेत्तदा वह्निधूमयोः कार्य्यकारणभावोऽपि न स्यादिति तर्केण निवर्तत इत्यग्रे तर्कः क्वचिच्छङ्कानिवर्तक इत्यत्र स्फुटीभविष्यति, एवं यद्यत्रापि तत्रानुमाने अस्तु शरीराजन्यत्वं मास्तु कर्त्रजन्यत्वमित्याशङ्का भवेत्तदात्रापि विपक्षे बाधकतर्कस्यापेक्षा, तस्य चाभावात्तवानुमानं व्यभिचारपिशाचप्रवेशकलङ्कहतश्रीकमिति नास्मदनुमानदूषणायालं सम्भवतीति । ननु सिद्धान्तिनामनुमानेऽपि स एव दोषोऽत आह—**मम त्विति** ममानुमाने तु यदि कार्य्यत्वं कर्तृजन्यत्वं विनापि भवेत्तदा कर्तृत्वेन कार्य्यत्वेन कार्य्यकारणभावोऽपि न स्यादित्यनुकूलतर्कसत्त्वेन निष्कलङ्कानुमानसिद्ध एव त्रिभुवनभवनकर्ता भगवानन्तर्यामीश्वर इत्यर्थः । एवं प्रोक्तानुमानेनेश्वरासिद्धौ तदुच्चरितत्वेन वेदस्यापि प्रामाण्यनिश्चयाद्वेदोऽपीश्वरे प्रमाणमत आह—**द्यावेत्यादि** ॥ १ ॥

**द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।**
**समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥२॥**

अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः । एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्यविरुद्धाः । प्रतिपादितं चैवमेव भाष्ये । अत एवोप-

---

मूले **द्रव्यं गुण** इति कर्म्मणः संयोगातिरिक्तत्वं नास्तीति भूषणकारमतनिरासाय तथेत्युक्तं, यथा द्रव्यादयः पदार्था युक्तिसिद्धास्तथा कर्म्मापीति तदर्थः । एवमभावस्याधिकरणातिरिक्तत्वं नास्तीति मीमांसकमतनिरासाय पुनस्तथेत्युक्तं । युक्तिस्त्वग्रे वक्ष्यते । मया पदार्था निरूप्यन्ते, कथंभूताः ? ये कणादादिभिः सप्त कीर्तिता इति चतुर्थपादस्यार्थः । अत्र पदस्यार्थाः पदार्था इति व्युत्पत्त्या वाच्यत्वं पदार्थसामान्यलक्षणमिति सूचितं बोद्धव्यं मुक्तावल्यां **पदार्थान् विभजत इति** परस्परासमानाधिकरणव्याप्यधर्म्मपुरस्कारेण यावतां सामान्यवतां प्रतिपादनं विभागः । तथा चैतद्वाक्यस्य विभागपरतया कणादादिभिरपि द्रव्यत्वादिसप्तरूपतयैव विभागकरणाच्चैतेभ्योऽन्ये पदार्था नैव सन्ति, किन्तु सप्त एवेति सुविचारणीयम् । ननु ग्रन्थान्तरेषु—" पदार्थो द्विविधो भावोऽभावश्च, तत्र भावः षड्विधो द्रव्यादिः, अभावस्तु चतुर्विध " इति रीत्या पदार्था निरूपितास्तथैव भवतापि कथं न निरूपिताः ? अत आह—**सप्तमस्येति** । भावत्वं प्राप्तं द्रव्यादयः षट् भावा अभावत्वासमानाधिकरणधर्म्मवत्त्वादित्यनुमानाद्भावत्वं प्राप्तमित्यर्थः । अभावत्वव्यधिकरणधर्मवत्त्वं च विभागवाक्यादेव लब्धमिति ज्ञेयम् । **तेन** प्राप्तत्वेन **पृथगुपन्यासो** भावत्वेनोपन्यासः । ननु न्यायमते—" प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम " इति गौतमसूत्रेण षोडशपदार्थनिरूपणाद्भवत्कृतविभागोऽनुचित अत आह—**एते चेति** । भाष्यसम्मतिमाह—**प्रतिपादितमिति** । **एवमेवेति** द्रव्यादयः सप्तैव पदार्थाः

मानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम्। ननु कथमेते एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्। तथाहि। मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते। तत्र च मण्यादिना वह्नौ दाहानुकूला

---

षोडशानामत्रैवान्तर्भावादिति। भाष्ये प्रशस्तपादभाष्ये। षोडशानामत्रैवान्तर्भावप्रकारस्तु ग्रंथान्तरतोऽवसेयः। भाष्यस्यार्षत्वेन तत्र कथनमात्रादेव मंतव्यं किंवा तत्र युक्तिरप्यस्त्यतः सप्तैव पदार्था इत्यत्र चिंतामणिकृतमतप्रदर्शनपूर्विकां युक्तिमाह—**अत एवेति** षोडशानामत्रैवान्तर्भावसम्भवेन नैयायिकानामपि सप्तैव पदार्था इत्यविरुद्धत्वादेव उपमानचिन्तामणावुपमानखण्डस्य चिन्तामणावित्यर्थः। अतिरिक्तपदार्थत्वमाशङ्कितं न तु प्रतिपादितमिति भावः. तथाचोपमानप्रमाणस्वीकारेण चिन्तामणेर्नैयायिकग्रंथतया तत्र च सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामाशङ्कितत्वेन न नैयायिकानामपि सप्तपदार्थत्वे विवाद इति सिद्धं। मण्यादिसत्त्वदशायां वह्निना दाहानुदयान्मण्यादेर्दाहप्रतिबन्धकत्वं वक्तव्यं प्रतिबन्धकत्वञ्च कार्य्यानुकूलधर्मविघटकत्वं तथा चैतादृशप्रतिबन्धकत्वस्य शक्तिं विनाऽघटमानत्वात् शक्तिसिद्धिरिति प्रभाकरमतप्रदर्शनपरं मणिकृतामेव ग्रंथमवतारयति नन्वित्यादिना। पदार्थान्तरतामेवावतारयति **तथाहीति** मण्यादिसमवहितेन वह्निना दाहो न जन्यत इति परेणान्वयः अनुमीयत इति च तदर्थः। तथा चानुमानं, प्रतिबन्धकसत्त्वदशायां वह्निना काष्ठादौ दाहाभावः कारणाभावप्रयुक्तः कार्य्याभावत्वात् दण्डाभावप्रयुक्तघटाभाववदिति तथा च दृष्टकारणस्य वह्न्यादेस्तत्र सत्वेनादृष्टकारणस्य शक्तेरेवाभावस्तत्र कल्पनीय इति शक्तिसिद्धिः। ननु मण्यादेरेव कथं प्रतिबन्धकत्वमत आह **तच्छून्येनेति** मण्यादिसमवधानशून्येनेत्यर्थः। ननु यदि वह्नौ दाहानुकूला शक्तिस्तदा मण्यादिसत्त्वदशायामपि कथं न दाह अत आह **तत्रेति** पूर्वोक्तयुक्तया शक्तिसिद्धौ चेत्यर्थः। अत्र सर्वत्र मण्यादीत्यादिना मन्त्रौषधादेः परिग्रहणम्। ननु मण्यादिना यदि वह्नौ दाहानुकूला शक्तिर्नाशिता तर्हि सत्यु-

शक्तिर्नाश्यते उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति कल्प्यते। एवं सादृश्यमप्यतिरिक्तः पदार्थः। तद्धि न षट्सु भावेष्वन्तर्भवति सामान्येऽपि सत्त्वात् । यथा गोत्वं नित्यं तथाश्वत्वमपीति सादृश्यप्रतीतेः । नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेन्न, मण्याद्यभावविशिष्टवह्न्यादेर्दाहा-

---

त्तेजके मण्याद्यपसारणे वा दाहो न स्याच्छक्तिरूपकारणाभावादत आह **उत्तेजकेनेति मण्याद्यपसारणेन च** मण्याद्यपसारणेन वेत्यर्थः । **इति** एतादृशस्वरूपा अर्थात् प्रतिबन्धकसत्त्वासत्त्वादिदशायां विनाशोत्पादशालिनी शक्तिरनुमीयते । सा च न द्रव्यगुणकर्म्मस्वरूपा गुणवृत्तित्वात् सामान्यादिवत् एवं शक्तिर्न सामान्याद्यन्यतमरूपा उत्पत्तिमत्त्वे सति विनाशित्वादित्येवं क्लृप्तपदार्थानन्तर्भूतत्वेनातिरिक्तशक्तिसिद्धिरिति ज्ञेयम् । एवमतिरिक्तां शक्तिं प्रसाध्य सादृश्यस्याप्यतिरिक्ततां व्यवस्थापयति **एवमित्यादिना** एवं शक्तिवद-तिरिक्तः क्लृप्तपदार्थातिरिक्त इत्यर्थः । तदेव व्यवस्थापयति **तद्धीति** हि यतस्तत्सादृश्यं न षट्सु भावेष्वन्तर्भवति सामान्येऽपि सत्वात्सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादित्यर्थः । अभाववदिति दृष्टान्तो ज्ञेयः । सादृश्यस्य सामान्यवृत्तित्वं कथं ज्ञातमतस्तत्प्रसाधकं प्रत्यक्षप्रमाणमाह—**यथा गोत्वमित्यादिना** । अत्र यदि केवलं सामान्यवृत्तित्वादिति हेतुः स्यात्तदा स्वरूपसंबन्धविशेषरूपे सामान्यत्वे व्यभिचारः स्यात्तस्य सामान्यवृत्तित्वेऽपि भावभिन्नत्वाभावादतस्तद्वारणायापीत्युक्तं, सामान्येतरवृत्तित्वे सतीति च तदर्थः, स च पूर्वमेव कथितः । प्रमेयत्वादौ व्यभिचारवारणाय व्यतिरेकित्वे सतीत्यपि हेतौ विशेषणं देयमिति दिक् । अभावेऽन्तर्भावं निषेधति—**नापीति, सत्त्वेन,** भावत्वेन प्रतीयमानत्वात्प्रमीयमाणत्वादित्यर्थः । तस्मात् षड्भावानन्तर्भूतत्वे सत्यभावानन्तर्भूतत्वाच्छादृश्यमप्यतिरिक्तः पदार्थ इति भावः । संप्रति पूर्वोक्तां शक्तिं दूषयति—**मण्याद्यभावेति,** मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति हेतुत्वं कल्प्यत इति योजना । अनन्तशक्तिकल्पनां पूर्वोक्तनाश्यनाशकभावकल्पनां चापेक्ष्य लाघवात् मण्याद्यभावविशिष्टवह्न्यादेरेव दाहत्वाद्यवच्छिन्नं प्रति

**दिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते । अनेनैव सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात् । न चोत्तेजके सति मणिप्रतिवन्धकत्वसद्भावेऽपि कथं दाह इति वाच्यम् ।**

---

कारणत्वकल्पनं युक्तमिति भावः । तथा च प्रतिवन्धकमणिसत्त्वदशायां मण्यभावरूपविशेषणाभावादेव न दाह इति भावः । अत्र मण्याद्यभावविशिष्टं वह्नित्वं वह्निविशिष्टं मण्याद्यभावत्वं वा कारणतावच्छेदकमिति विनिगमनाभावेन गुरुभूतकार्यकारणभावद्वयकल्पनापेक्षया लघुभूतकार्य्यकारणभावद्वयमाह—**स्वातन्त्र्येणेति,** यथा वह्नित्वेन वह्निः कारणं तथा मण्याद्यभावत्वेन मण्याद्यभावोऽपि दाहत्वावच्छिन्नं प्रति कारणमित्यर्थः । तथा च मण्यभावरूपकारणाभावादेव न दाहः । एवं च प्रतिवन्धकत्वमपि न कार्य्यानुकूलधर्म्मविघटकत्वं, किन्तु कारणीभूताभावप्रतियोगित्वं । प्रकृते च कारणीभूताभावो मण्याद्यभावस्तत्प्रतियोगित्वं च मण्यादेरस्तीति मण्यादेः प्रतिवन्धकत्वमस्तीति दिक् । ननु वह्निमण्यभावयोर्द्वयोः कारणत्वकल्पनापेक्षया एकां शक्तिं प्रसाध्य तादृशशक्तिमत्त्वेनैकमेव कार्य्यकारणभावकल्पनं युक्तमत आह—**अनेनैवेति,** मण्याद्यभावादेरेव दाहादिकं प्रति कारणत्वकल्पनेनैव **सामञ्जस्ये** मण्यादिसत्त्वदशायां दाहापत्तिवारणसम्भवे ( सतीत्यर्थः )। प्रागभावे मानाभावादाह—**ध्वंसेति ।** **न चोत्तेजकेति** यदि मण्यादिरूपप्रतिबन्धकाभावो दाहत्वाद्यवच्छिन्नं प्रति कारणं स्यात्तदोत्तेजके सूर्यकान्तादौ सति प्रतिवन्धकसद्भावेऽपि दाहो भवति स न स्यादित्यर्थः । **उत्तेजकाभावेति** तथा च उत्तेजकाभावविशिष्टो यो मणिस्तदभावो दाहं प्रति कारणमिति तत्त्वं पर्य्यवसितं । तादृशाभावश्च मणिसमवधानकालेऽप्युत्तेजकसत्त्वदशायां तिष्ठति, विशेषणाभावप्रयुक्तविशिष्टाभावात । एवमुभयमण्याद्यभावदशायामपि विशेष्याभावप्रयुक्तविशिष्टाभावात् । एवं केवलमुत्तेजकसत्त्वदशायामपि उभयाभावप्रयुक्तविशिष्टाभावात् । केवलं यत्रोत्तेजकं नास्ति प्रतिवन्धकश्च भवेत्तत्रैवोत्तेजकाभावविशिष्टमणेः सत्त्वेन न दाहः, उत्तेजकाभावविशिष्टमण्यभावस्याभावादिति सर्वं समञ्जसमतो न काचिदती-

उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात् । सादृश्यमपि न पदार्थान्तरं किंतु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥

द्रव्याणि विभजते—

**क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।**

**द्रव्याणि**

क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरुद् वायुः, व्योम आकाशः, कालः समयः, दिगाशा, देही आत्मा, मनः, एतानि नव द्रव्याणीत्यर्थः । ननु द्रव्यत्वजातौ किं मानम् । न हि

---

न्द्रिया शक्तिर्नामेति सिद्धं । एवं शक्तिसाधनं दूषयित्वा सादृश्यमपि दूषयति— **सादृश्यमपीति** न पदार्थान्तरं न सप्तपदार्थातिरिक्तमित्यर्थः । **तद्भिन्नत्वे सतीति** सादृश्यनिरूपकभिन्नत्वे सति । **तद्गतेति** सादृश्यनिरूपकगतैच्छिकधर्म्मवत्त्वमित्यर्थः । लक्ष्ये लक्षणं योजयति—**यथेति** सादृश्यनिरूपकाच्चन्द्राद्भिन्नत्वे सति चन्द्रगत ऐच्छिको धर्म्म आह्लादकत्वादिकः तद्वत्त्वं च मुख इति । तस्मात्सादृश्यं नातिरिक्तः पदार्थः, किन्तु यथायथं द्रव्यादिरूपमेव । इतिशब्दः श्लोकव्याख्यासमाप्तिसूचक इति शम्. ॥ २ ॥

**द्रव्याणि विभजत** इति । क्षयार्थकोऽपि क्षितिशब्दोऽस्तीत्यत आह— **क्षितिः पृथिवीति** । शब्दशास्त्रे अप्शब्दोच्चारणे अप्शब्दव्यक्तिरेव गृह्यतेऽत आह—**जलानीति** । प्रतापस्यापि तेजःशब्दवाच्यत्वादाह—**तेजो वह्निरिति** । व्योमशब्दस्य वेदे ब्रह्मणि प्रयोगादाह—**आकाश** इति । कालशब्दो यमस्यापि वाचकोऽत आह—**समय** इति । दिक्शब्दस्य दानार्थकत्वसंभवादाह— **आशेति** । देहविशिष्टावयवानामपि वाचको देहीतिशब्दः सम्भवत्यत आह— **आत्मेति** । मूले द्रव्याणीति कथनेन द्रव्यत्वजातिमत्त्वं द्रव्यसामान्यलक्षणं सूचितं । तत्र पृच्छति **द्रव्यत्वजातौ किं मानमिति** किंशब्दः प्रश्ने,

तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न कार्यसमवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा कार्यसमवायिकारणतावच्छेदकतया तत्सिद्धेरिति । ननु दशमं द्रव्यं तमः कुतो नोक्तं तद्धि प्रत्यक्षेण गृह्यते तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्य-

---

ननु द्रव्यं द्रव्यमित्यनुगता प्रतीतिरेव द्रव्यत्वसाधिकेत्यत आह—**न हीति** तत्र द्रव्यत्वजातौ । **घृतेति** तथा च द्रवत्ववत्यपि घृतादौ लौकिकानां द्रव्यत्वज्ञानाभावान्न सकलद्रव्यसाधारणा द्रव्यत्वजातिः सिध्यतीति भावः । **कार्य्येति** तथा च समवायसंबन्धावच्छिन्नकार्य्यत्वावच्छिन्नकार्यनिष्ठकार्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्ना कारणता सा किंचिद्धर्मावच्छिन्ना (असति प्रतिबन्धके किञ्चिज्जात्यवच्छिन्ना,) कारणतात्वाद् घटनिष्ठकार्य्यतानिरूपितकपालनिष्ठकारणतावदित्यनुमानेन द्रव्यत्वसिद्धेः जातिरूपद्रव्यत्वसिद्धेरित्यर्थः । कार्य्यत्वस्य ध्वंससाधारण्येनाह—**संयोगस्येति** । अत्रापि समवायसंबन्धावच्छिन्नसंयोगत्वावच्छिन्नेत्यादिरनुमानप्रकारो बोध्यः । नवीनमते विभुद्वयसंयोगस्य नित्यस्यापि स्वीकारान्न संयोगत्वं कार्य्यतावच्छेदकमत आह—**विभागस्येति** । तथा च समवायसम्बन्धावच्छिन्नविभागत्वावच्छिन्नविभागनिष्ठकार्य्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्ना कारणता सा किंचिद्धर्मावच्छिन्ना, कारणतात्वात्, घटनिष्ठकार्य्यतानिरूपितकपालनिष्ठकारणतावत्, सिद्धो धर्म्मो जातिश्चेत्तदा लाघवमिति तर्कसहकृतानुमानेन द्रव्यत्वसिद्धेः अग्रे वक्ष्यमाणव्यक्त्यभेदादिरूपजातिप्रतिबन्धकाभावात्पूर्वोक्तानुमानेन द्रव्यत्वरूपजातिसिद्धेरित्यर्थः । ननु तमसः दशमद्रव्यस्य सत्त्वान्नव द्रव्याणीत्ययुक्तमित्यभिप्रायेण मीमांसकः शङ्कते—**नन्विति** । तमसि मानाभावादेव नोक्तमत आह—**तद्धीति** तमो हीत्यर्थः । **प्रत्यक्षेण** चक्षुरिन्द्रियेण । तथा च तमसि प्रत्यक्षमेव प्रमाणं । ननु तमसः सिद्धावपि तस्य द्रव्यत्वे किं मानमत आह—**तस्य चेति** तमो द्रव्यं, रूपवत्त्वाद्, घटवत् । एवं तमो द्रव्यं, कर्म्मवत्त्वाद्घटवदेवेत्यनुमानद्वयेन द्रव्यत्वं सिध्यतीत्यर्थः । ननु तस्य द्रव्यत्वेऽपि न दशमद्रव्यत्वं

त्वं, तच्च(द्धि) गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्त्वाच्च न जलादिकं, तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेन्न, आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । रूपवत्ताप्रतीतिस्तु भ्रमरूपा । कर्मवत्ताप्रतीतिरप्यालोकापसारणौपाधिकी भ्रान्तिरेव ।

---

क्लृप्तद्रव्येष्वेवान्तर्भावादत आह—**तद्धीति** तमो न पृथिवी गन्धशून्यत्वात्प्रतियोगिव्यधिकरणसमवायसंबन्धावच्छिन्नगन्धत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वादित्यर्थः, इत्यनुमानेन तमसि पृथिवीभेदसिद्धौ, तमो न जलादिरूपं नीलरूपवत्त्वादित्यनुमानेन च तमसि जलाद्यष्टभेदसिद्धौ चातिरिक्तद्रव्यत्वसिद्धिरिति भावः । ननु द्रव्यप्रत्यक्षे आलोकसंयोगावच्छिन्नचक्षुःसंयोगस्य कारणत्वेन तमसि चालोकसंयोगस्याभावेन चक्षुरिन्द्रियेण तमःप्रत्यक्षं न स्यादत आह—**तत्प्रत्यक्षे चेति** तमःप्रत्यक्षे चेत्यर्थः । तथा च तमोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येवालोकसंयोगस्यापेक्षितत्वं, न तु द्रव्यमात्रप्रत्यक्षत्वावच्छिन्नं प्रति, यथादर्शनं हि कारणतायाः कल्पनीयत्वादिति भावः । **आवश्यकेति** ननु तेजस एवान्धकाराभावरूपत्वं किं न स्यादत आवश्यकपदं सर्वानुभूतोष्णस्पर्शभास्वरशुक्लरूपादिनावश्यं कल्पनीयस्य तेजसोऽभावस्वरूपोऽन्धकार इति स्वीकारेणैवोपपत्तौ तम इति प्रतीत्युपपत्तौ । ननु तमसोऽभावस्वरूपतास्वीकारे नीलं तमश्चलतीति प्रतीतिः कथमुपपद्यते अन्धकारे रूपकर्मणोरभावादत आह—**रूपेति** तुशब्द एवकारार्थः भ्रमरूपैवेत्यर्थः । एवं कर्मवत्ताप्रतीतिरपि यत आलोकापसारणौपाधिकी अतो भ्रान्तिरेवेत्यर्थः । द्रव्येऽप्यन्यौपाधिकी कर्मवत्ताप्रतीतिर्भ्रान्तिरूपैव भवति नौकास्थपुरुषाणां वृक्षश्चलतीति प्रतीतिवदित्येवकारार्थः । ननु प्रतीतेर्भ्रान्तित्वं तत्रैव स्वीक्रियते यत्रोत्तरकाले बाधज्ञानं स्याद्यथा रज्जौ सर्पज्ञानस्य भ्रान्तित्वं तदैव निश्चितं भवति यदा नायं सर्पः किन्तु रज्जुरिति बाधज्ञानं भवेदन्यथा सर्वप्रतीतीनां भ्रान्तित्वं स्यात । नीलं तमश्चलतीति प्रतीत्यनन्तरं तु अनीलं तमो न चलतीति बाधनिश्चयाभावेन नीलं तमश्चलतीति प्रतीतेः कथं भ्रान्तित्वनिश्चयोऽत

तमसोऽतिरिक्तत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात् । स्वर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते ॥

गुणान्विभजते—

**अथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥**
**स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।**
**संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥**
**बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।**
**द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥५॥**

एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतः चशब्देन च

---

आह—**तमसोऽतिरिक्तद्रव्यत्व** इति अनन्तावयवादीत्यत्रादिनोत्पत्तिध्वंसपरिग्रहः, अयमाशयः—धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति तर्केण यथा धूमे वह्निव्यभिचारज्ञानं निवर्तते तथात्रापि क्रियादिहेतुना तमसो द्रव्यत्वसाधनावसरे तमो यदि द्रव्यं स्यात्तदा क्लृप्तानन्तावयवादिकल्पनागौरवं स्यादिति तर्केण द्रव्यत्वज्ञानप्रतिबन्धसम्भवान्न क्रियादिहेतुनापि तमसो द्रव्यत्वं सिध्यतीति । ननु तमसोऽद्रव्यत्वेऽपि सुवर्णस्य तु दशमद्रव्यत्वं स्यादत आह—**सुवर्णस्येति** अग्रे तेजोनिरूपणावसर इत्यर्थः

**गुणान् विभजत** इति । **चतुर्विंशतिसंख्याका** इति संख्या चात्रापेक्षाबुद्धिविशेषविषयत्वरूपा बोध्या गुणे गुणानङ्गीकारेण गुणरूपायाः संख्याया गुणेऽसम्भवात् । ननु भवता स्वेच्छयैवैते गुणा निरूपिताः किंवा प्राचीनाचार्यैरपि प्रतिपादिता अत आह—**एते चेति** । **कण्ठत** इति " रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा " इति विभागसूत्रे सप्तदश कण्ठेनोक्ताः, चशब्देन सूत्रस्थचशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दाः

दर्शिताः । तत्र गुणत्वादिकजातिसिद्धिरग्रे वक्ष्यते ॥ ३–४–५ ॥

कर्माणि विभजते––

**उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।**
**प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥**

कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेपणत्वादिकमपि ॥ ६ ॥

नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह-

**भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।**
**तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥**

सामान्यं निरूपयति––

**सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।**
**द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥**

तल्लक्षणं तु नित्यत्वे सति अनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं नित्यत्वे सतीति । नित्यत्वे सति सम-

---

समुच्चिताः, ते च सर्वे एकतया चतुर्विंशतिगुणा इह व्याहृताः । ननु चतुर्विंशतौ किं नाम गुणत्वमत आह—तत्रेति गुणेष्वित्यर्थः। **अग्रे** गुणनिरूपणावसरे ३-४-५॥

**कर्माणि विभजत** इति । **प्रत्यक्षसिद्धेति** चलतीत्यनुगतप्रतीतिसिद्धेत्यर्थः । मूले **गमनादेवेति** ननूत्क्षेपणादीनामपि भ्रमणादिवदेव गमनेऽन्तर्भावसंभवात्तेऽपि गमनादेव कथं न समुच्चिताः इति चेन्न, स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगासम्भवादिति ॥ ६–७ ॥

**सामान्यं निरूपयतीति** ननु सामान्यादौ जातेरस्वीकारेण तद्धर्मावान्तरधर्मप्रकारकज्ञानगोचरेच्छां प्रति तद्धर्मज्ञानस्य कारणत्वात् सामान्यत्वज्ञानं विना विभागासंभवादाह—**तल्लक्षणं त्विति** सामान्यलक्षणं त्वित्यर्थः । **नित्यत्वेति** ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वं नित्यत्वं । **अनेकेति** अत्रानेक-

वेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति। नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम्। एकमात्रव्यक्तिवृत्तिस्तु न जातिः। तथा चोक्तम्—

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः" ॥ १ ॥

---

समवेतत्वं च स्वप्रतियोगिसमवेतत्वस्वाधिकरणसमवेतत्वोभयसंबन्धेन भेदविशिष्टत्वमिति बोध्यं, अन्यथा गुणादौ गुणरूपाया अनेकत्वसंख्याया असत्वेनाव्याप्तिः स्यात्। अत्र स्वपदेन तद्घटादिभेदस्तत्प्रतियोगिनि तद्घटे समवेतत्वं घटत्वस्य, पुनर्द्वितीयस्वपदेनापि स एव तद्घटभेदस्तस्याधिकरणमन्ये घटास्तत्समवेतत्वं च घटत्वस्येति लक्षणसमन्वयः। नन्वाकाशत्वरूपजातावेतादृशलक्षणस्याव्याप्तिरित्याशंक्यालक्ष्यत्वेनोत्तरमाह—**एकव्यक्तिमात्रेति** नानाघटादिव्यक्तिषु घट इत्यादिरेकधर्म्मप्रकारकबुद्ध्युपपत्त्यर्थमेव घटत्वादिरूपा जातिः कल्प्यते, एकव्यक्तौ त्वेकधर्म्मप्रकारकबुद्धेस्तद्व्यक्तित्वमादायापि संभवेन न तत्रातिरिक्तजातिसिद्धिरिति भावः। तद्व्यक्तित्वं च तादात्म्येन सैव व्यक्तिरिति ज्ञेयं। नन्वाकाशत्वं जातिरिति प्रतीतिरेवाकाशत्वस्य जातित्वसाधिका भविष्यतीत्यत एकव्यक्तिवृत्तिराकाशत्वादेर्जातित्वं नास्तीत्यत्र वृद्धसंमतिमाह—**तथा चोक्तमिति** द्रव्यकिरणावल्यामुदयनाचार्य्यैरिति शेषः **एष जातिबाधकसंग्रहः** जातित्वप्रकारकज्ञानप्रतिबन्धकज्ञानविषयाणां संग्रह इत्यर्थः। **व्यक्तेरभेद** एकव्यक्तिकत्वं स्वाश्रयव्यक्तिनिष्ठव्यासज्यवृत्तिधर्म्मानवच्छिन्नस्वाश्रयव्यक्तिनिष्ठभेदप्रतियोगितानवच्छेदकताकत्वमिति निष्कर्षो बोध्यः। एतच्चाकाशत्वादीनां जातित्वे बाधकं। तुल्यत्वमन्यूनानतिरिक्तव्यक्तिवृत्तित्वं घटत्वकलशत्वादीनां जातिभेदे बाधकं। वस्तुतस्तु तुल्यत्वस्यैतादृशत्वे जातिबाधकेत्यस्य कुत्रचिज्जातित्वबाधकत्वं कुत्रचिच्च जातिभेदबाधकत्वमर्थः स्यात्, तच्च न संभवति, "सकृदुच्चरितः शब्दः सकृदेवार्थं बोधयतीति" न्यायात्, अतस्तुल्यत्वमित्यस्य स्वभिन्नजातिसमनियतत्वमित्यर्थोऽवसेयः, तच्च जातित्व एव

द्रव्यादीति । परत्वमधिकदेशवृत्तित्वम् । अपरत्वमल्पदेशवृत्तित्वम् । सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम् । तदपेक्षया चान्यासां जातीनामपरत्वम् ॥ ८ ॥

---

बाधकमिति ध्येयम् । संकरश्च परस्परात्यन्ताभावसमानाधिकरणयोर्धर्म्मयोरेकत्र समावेशः । स च भूतत्वमूर्तत्वादीनां जातित्वे बाधकः । अत्र मूर्तत्वं तु क्रियासमवायिकारणतावच्छेदकतया जातिविशेषः सिद्ध एव, किंतु भूतत्वं न जातिरिति ध्येयम् । अप्रामाणिकपदार्थपरंपरासिद्धिरनवस्था, सा च जातेर्जातित्वे बाधिका । यद्यपि निखिलजातिषु वैजात्याङ्गीकारेऽपि पुनस्तद्वैजात्येन वैजात्यान्तरं कल्पयितुं शक्यते, एकव्यक्तित्वात्, तथापि निखिलजातिष्वेकं वैजात्यं, तद्वैजात्यतदाश्रयजातिषु च पुनर्वैजात्यमेवमग्रेऽपीत्यनवस्था बोध्या । रूपहानिरित्यस्य रूपस्य स्वरूपस्य हानिरथवा रूपस्य लक्षणस्य हानिः विशेषवृत्तिविशेषत्वादीनां जातित्वे बाधिका विशेषे जात्यङ्गीकारे तु तत्स्वरूपस्य स्वतोव्यावृत्तस्य हानिः स्यात् । एवं विशेषस्य लक्षणं स्वतो व्यावर्तकत्वं, स्वतो व्यावर्तकत्वं च स्वरूपेणैव भेदसाधकत्वं, विशेषे वैजात्याङ्गीकारे च जातिप्रकारकतयापि विशेषस्य व्यावर्तकत्वं वाच्यम्, जात्याश्रयस्य जातिरूपेणापि भेदसाधकत्वनियमात् । एवं च विशेषस्य यल्लक्षणं स्वतो व्यावर्तकत्वं तस्य हानिर्जाता । अत्र च दिनकर्यामितरथैव व्याख्या दृश्यते तस्यास्तु क्लिष्टकल्पनारूपत्वादुपेक्षणीयत्वमिति ध्येयम् । यद्वा निःसामान्यत्वे सति सामान्यभिन्नत्वे च सति समवेतत्वमिति हि प्राचीनशिष्टकृतं विशेषलक्षणं विशेषवृत्तीनां वैजात्याङ्गीकारे चैतल्लक्षणस्यापि हानिर्भवतीति न विशेषे जातिरस्तीति । असंबन्धः प्रतियोगितानुयोगितान्यतरसंबन्धेन समवायाभावः, स च समवायाभाववृत्तीनां समवायत्वाभावत्वादीनां जातित्वे बाधकः । अत्रानुयोगितासंबन्धः उभयवादिसिद्धो ग्राह्यस्तेनाभावत्वादेर्जातित्वाङ्गीकारे समवायेनैव तद्वृत्तित्वं वाच्यं, तथा चानुयोगितासंबन्धेनाभावादौ समवायाभावस्याभावादभावत्वादेः कथं न जातित्वमिति दूषणं निरस्तम् ॥ ८ ॥

**परत्विन्ना च या जातिः सैवापरतयोच्यते।**
**द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥**
**व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च।**

पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात् द्रव्यत्वादेः परत्वं, सत्तापेक्षया व्याप्यत्वादल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वं, तथा च धर्मद्वयसमावेशादुभयमविरुद्धम् ॥

विशेषं निरूपयति—

**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥**

अन्ते अवसाने वर्तत इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः परमाणूनां

---

मूले द्रव्यादिरिति, अत्र तुशब्दः एवकारार्थः, स च भिन्नक्रमः तथा च द्रव्यादित्रिकवृत्तिः सत्ता परतया एवोच्यते इत्यर्थः ॥ ९ ॥

**विशेषं निरूपयतीति।** **अंत्य** इति अन्त्यत्वं च स्वतो व्यावृत्तत्वं। तदेवाह—**यदपेक्षयेति** यदपेक्षया विशेषापेक्षया विशेषो भेदसाधको नास्ति यस्य परस्परभेदसाधकः स्वस्मादन्यो नास्तीत्यर्थः। यद्यपि विशेषस्याप्येतत्परमाणुवृत्तित्वादयः परस्परभेदसाधकाः संभवन्ति तथापि विशेषवृत्त्येतत्परमाणुवृत्तित्वादीनामाधेयतादिरूपत्वादाधेयतायाश्च स्वरूपसंबन्धरूपतया न विशेषातिरिक्तत्वमिति दिक्। वस्तुतस्तु परमाणुभेदः किंचिल्लिङ्गज्ञाप्यः, भेदत्वात्, कपालभेदवदित्यनुमानेन स्वतो व्यावृत्तस्वरूपस्यैव विशेषस्य सिद्धेर्न तत्रैतत्परमाणुवृत्तित्वादीनामपि भेदसाधकत्वमिति सुविचारणीयम्। नित्यद्रव्यवृत्तिरिति तु स्वरूपकथनं, न तु लक्षणप्रविष्टं, प्रयोजनाभावात्। एतेन विशेषे प्रमाणमपि दर्शितं भवति। तदेव स्पष्टयति—**घटादीनामिति। तत्तदवयवभेदात्परस्परं भेद** इति तत्तदवयवभेदप्रयुक्तः परस्परभेदः प्रत्यक्षसिद्ध

परस्परभेदको विशेष एव । स तु स्वत एव व्यावृत्तः तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥ ९ ॥ १० ॥

समवायं दर्शयति--

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।**
**तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥ ११ ॥**

अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः संबन्धः स समवायः । समवायत्वं नित्यसंबन्धत्वम् । तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसंबन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमा-

---

एवेत्यर्थः । **स तु स्वत एवेति** परतो व्यावृत्तत्वेऽनवस्थापातादिति भावः । तेनेति स्वतो व्यावृत्तत्वेन तत्र विशेषे विशेषान्तरापेक्षा भेदकान्तरापेक्षेत्यर्थः ॥ १० ॥

**समवायं दर्शयतीति** मूले घटपदकपालपदे अवयव्यवयवपरे इत्याह **अवयवावयविनोरिति** । एतद्बोधनार्थैव मूले आदिपदमिति ध्येयम् । मूलस्थचशब्देन नित्यद्रव्येषु विशेषाणां संबन्धः समुच्चीयत इत्याह—**नित्यद्रव्यविशेषयोरिति** । समवायलक्षणमाह—**नित्यसंबन्धत्वमिति,** अत्र संबन्धिभिन्नत्वे सतीत्यधिकं देयं, तथा च नित्यत्वे सति संबन्धिभिन्नत्वे च सति संबन्धत्वमिति सिध्धान्तलक्षणं पर्यवसितं, तेन द्रव्यत्वाभावस्य लाघवादेको द्रव्यत्वाभावस्वरूप एव स्वरूपसंबन्धः । एवं महाकाले घटादीनां कालिकसंबन्धो लाघवादेको नित्यः कालस्वरूप एवेति न तत्र तत्रातिव्याप्तिः, द्रव्यत्वाभावादिस्वरूपसंबन्धादेः संबन्धिभिन्नत्वाभावादिति भावः । संबन्धत्वं च तद्यथार्थविशिष्टधीनियामकत्वं, सांसर्गिकविषयतावत्त्वं वा । ननु समवायस्य संबन्धत्वे किं मानमित्याशंक्याह—**तत्र प्रमाणं त्विति** समवायस्य संबन्धत्वे प्रमाणं त्वित्यर्थः । गुणक्रियादीत्यादिना जातिग्रहस्तथा च दण्डी पुरुष इति विशिष्टबुध्धौ विशेषणं दण्डो विशेष्यश्च पुरुषस्तयोः सत्त्वेऽपि

नम् । एतेन संयोगादिबाधात्समवायसिद्धिः । न च स्वरूपसंबन्धेन सिद्धसाधनम्, अर्थान्तरं वा, अनन्तस्वरूपाणां संबन्धत्वकल्पने गौरवाल्लाघवादेकसमवायासिद्धिः । न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् ।

---

संयोगाभावान्न विशिष्टबुद्धिरुदेतीत्यतस्तद्बुद्धौ तयोः संयोगोऽपि विषय इति सर्वसंमतं, तद्वद्रूपवान् घट इत्यादिबुद्धिरपि विशेषणविशेष्यसम्बन्धविषयैव वक्तव्या, तत्र विशेषणं रूपं विशेष्यश्च घटोऽस्त्येवेति सम्बन्धोऽपि कश्चिद्विषयत्वेन वक्तव्यः, यः सम्बन्धो विषयत्वेन स्वीक्रियते स एव समवाय इति भावः । ननु दण्डी पुरुष इति विशिष्टबुध्धिवद्रूपवान् घट इत्यत्रापि संयोग एव विषयत्वेन कल्प्यतामत आह—संयोगादिबाधादिति संयोगसामान्यं प्रति द्रव्यस्य समवायिकारणत्वेन द्रव्ययोरेव संयोग इति नियमादिति भावः । **न च स्वरूपसम्बन्धेनेति,** अयमाशयः—पूर्वोक्तानुमानेन रूपवान् घट इति बुद्धौ सम्बन्धोऽपि कश्चिद्विषयत्वेन भासत इत्येतदेव साधितं न तु समवाय एवेत्येतदपि, तथा च यदि स्वरूपसम्बन्धसाधनाय पूर्वोक्तानुमानं क्रियते तदा मीमांसकस्य सिद्धसाधनं, अयुतसिद्धयोः स्वरूपसम्बन्धस्य तेन पूर्वमेव स्वीकारात् । यदि च समवायसाधनार्थमेव पूर्वोक्तानुमानं, तदा तु नैयायिकस्यार्थांतरमनभिमतपदार्थसिध्धिरित्यर्थः, अतिरिक्तसमवायकल्पनापेक्षया लाघवात्स्वरूपसम्बन्ध एव रूपवान्घट इति बुध्धौ भासतामित्येवं स्वरूपसम्बन्धस्यैव सिद्धत्वादिति । **अनन्तस्वरूपाणामिति** अनन्तस्वरूपेषु सम्बन्धत्वस्य सम्बन्धकल्पनापेक्षया लाघवादेकस्मिन् समवाये एव सम्बन्धत्वकल्पनमुचितं, धर्मकल्पनापेक्षया धर्म्मिकल्पनाया एव लघीयस्त्वादितिभावः, तथा च लाघवतर्कसहकृतेन पूर्वोक्तानुमानेनैक एव समवायः सिद्ध्यतीति पर्य्यवसितोऽर्थः । **न चेति** रूपवत्ताबुद्धिप्रसंगः रूपवत्ताबुद्धेः प्रमात्वप्रसंग इत्यर्थः सम्बन्धसत्त्वस्य सम्बन्धिसत्त्वव्याप्यत्वादितिभावः । **तत्र वायौ । रूपसमवायसत्त्वेपीऽति** वायुनिरूपिताधेयताया रूपसमवाये सत्त्वेऽपि रूपाभावाद्रूपनिरूपितत्वविशिष्टसमवाया-

न चैवमभावस्य वैशिष्ट्यं संबन्धान्तरं सिध्येदिति वाच्यम्, तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात्। घटाभावस्य तत्र सत्त्वात्। तस्य नित्यत्वात्, अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात्। वैशिष्ट्यस्य च तत्र सत्त्वात्। मम तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः। वैशिष्ट्यस्या-

---

धिकरणतया वायावभावादित्यर्थः। तथा च रूपवानिति यथार्थप्रतीतेर्नियामकः सम्बन्धो रूपनिरूपितत्वविशिष्टसमवायाधिकरणता, तस्याश्च वायौ अभावात् रूपवान्वायुरिति बुद्धेर्न प्रमात्वमितिभावः। **न चैवमिति** यथा लाघवाद्गुणादेरतिरिक्तः समवायसम्बन्धः स्वीकृतस्तद्वदभावस्यापि **वैशिष्ट्यं** वैशिष्ट्यनामकं **सम्बन्धान्तरं** क्लृप्तपदार्थातिरिक्तं भूतलादौ सिध्येदित्यर्थः। यदि वैशिष्ट्यमतिरिक्तमङ्गीक्रियते तदा तन्नित्यमनित्यं वेति विकल्प्याद्ये दूषणमाह—**तस्येति** वैशिष्ट्यस्येत्यर्थः। **घटाभावबुद्धिप्रसंगात्**प्रमारूपघटाभावबुद्धेः प्रसङ्गादित्यर्थः। ननु वैशिष्ट्यस्य तत्र सत्त्वेऽपि घटसत्त्वदशायां तत्र घटाभावाभावादेव न घटाभाववत्ताबुद्धिरत आह—घटाभावस्येति। **तत्र** घटवति भूतले। **तस्येति** घटाभावस्येत्यर्थः। **अन्यथा** घटाभावस्यानित्यत्वे। देशान्तरेऽपि घटशून्यदेशेऽपि। घटाभावस्यैकत्वाद्यदि घटानयनदशायां घटवति भूतले घटाभावस्य नाशः स्वीक्रियते तदा गृहे मृतस्य देवदत्तस्य वने सत्त्ववत् घटानधिकरणेऽपि भूतले घटाभावसत्त्वं न स्यात्, प्रतीयते च तत्र घटाभावः, अतो घटाभावस्य नित्यत्वमेवेतिभावः। वैशिष्ट्यस्येति वैशिष्ट्यस्याभ्युपगमपक्ष इति शेषः। तथा च विशेषणस्य घटाभावस्य विशेष्यस्य भूतलादेस्तत्सम्बन्धस्य च वैशिष्ट्यस्य भवन्मतेन सत्त्वाद्घटवत्यपि भूतले प्रमारूपा घटाभावबुद्धिः स्यादतो न वैशिष्ट्यस्य नित्यत्वं कल्पयितुं शक्यत इति निर्गलितोऽर्थः। ननु नैयायिकमतेऽपि पाकेन रक्ते घटे श्यामरूपसमवायस्य सत्त्वात् श्यामरूपवत्ताबुद्धेः प्रसङ्ग इत्यत आह—**मम त्विति**। वैशिष्ट्यस्यानित्यत्वपक्षे दूषणमाह—**वैशिष्ट्यस्यानित्यत्व** इति अनित्यानन्तवै-

नित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम् । इत्थं च तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां संबन्धः ॥ ११ ॥

अभावं विभजते—

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥१२॥**
**एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।**

अभावत्वं द्रव्यादिषट्कान्योऽन्याभाववत्त्वम् । संसर्गाभावान्यो-

---

शिष्ट्यानि परिकल्प्य तेषु सम्बन्धत्वकल्पनापेक्षया क्लृप्तानन्तस्वरूपेष्वेव सम्बन्धत्वकल्पनं युक्तमितिभावः । नन्वभावाधिकरणयोरातिरिक्तसम्बन्धानङ्गीकारे अभावाधिकरणयोः कः सम्बन्धः ? स्वरूपमिति चेत्तदा तवापि मते घटाभावभूतलयोस्तत्संबन्धस्य च स्वरूपस्य सत्त्वाद्घटानयनेन घटवत्यपि भूतले घटाभावबुद्धिः स्यादत आह—**एवं चेति, तत्तत्कालीनमिति** भूतले घटो नास्तीति प्रमोपलक्षिततत्तत्कालविशिष्टं तत्तद्भूतलादिकमिति यस्मिन्यस्मिन्भूतले पूर्वोक्ता प्रमा जाता तत्तद्भूतलादिकं ।**तत्तदभावानामिति** यस्य यस्याभावस्य प्रमा जाता तेषां तेषामभावानामित्यर्थः । तत्कालविशिष्टं तद्भूतलं तदभावस्य सम्बन्ध इति निष्कर्षोऽर्थः । तथा च न केवलं स्वरूपसम्बन्धः किं त्वीदृशंस्वरूप इति न घटसत्त्वदशायामपि घटाभावबुद्धिप्रसङ्गरूपो दोष इति भावः ॥

**अभावं विभजत इति ।अभावत्वमिति** अत्र देहलीदीपकन्यायेन षट्कपदस्योभयत्र सम्बन्धात् द्रव्यादयो ये षट् तेषामन्योन्याभावाश्च ये षट् तद्वत्त्वमित्यर्थोऽवसेयस्तेन द्रव्यं न द्रव्यादिषडिति प्रतीत्या द्रव्येऽपि द्रव्यादिषट्कभेदस्य सत्त्वादभावलक्षणस्य प्रत्येकं द्रव्यादौ नातिव्याप्तिः।अत्र दिनकरभट्टैर्दिनकर्यां भावभिन्नत्वमिति लक्षणार्थो व्याख्यातस्तत्र च भावभिन्नत्वस्याभावत्वे भावत्वरूपविशेषणज्ञानशून्यकाले घटो नास्तीति प्रतीत्यनापत्तिः, एवमन्योन्याभावस्याभावत्वगर्भस्याग्रे वक्तव्यतयाऽभावस्यान्योन्याभावगर्भत्वे अन्योन्याश्रयापत्तिश्चेत्यादिदूषणा-

न्याभावभेदादित्यर्थः । अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते । प्रागभाव इति । संसर्गाभावत्वं, अन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं च तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वं प्रागभावत्वम् । जन्याभावत्वं ध्वंसत्वम् । नित्यसंसर्गाभावत्वम् अत्यन्ताभावत्वम् । यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र

---

न्युद्भाव्य अखण्डोपाधिरनुयोगिताविशेषो वाऽभावत्वमिति कस्यचिन्मतमुपन्यस्तं । तत्रापि च नवीनमतेऽभावस्याखण्डोपाधित्वे प्रमाणाभावोऽतः समवायस्वाश्रयसमवायान्यतरसम्बन्धेन सत्ताऽभावरूपं भावभिन्नत्वमेवाभावत्वमिति च पूर्वानुपस्थितमपि प्रकारः, अतो न दोषलेशोऽपीत्यादिकं व्याख्यातं, एतद्विशेषस्तु तत्रैवावलोकनीयः । **एकविधत्वादिति** अन्योन्याभावत्वावान्तरविभाजकधर्मशून्यत्वादित्यर्थः । क्रमेण द्वयोरभावयोर्लक्षणमाह—**संसर्गाभावत्वमिति** । घटादावतिव्याप्तिवारणायाभाव इति । **तादात्म्येति** स चासावात्मा च तदात्मा तदात्मनो भावस्तादात्म्यं तद्गतासाधारणो धर्मो घटत्वादिरूपः, तादात्म्यश्चासौ सम्बन्धश्च तादात्म्यसम्बन्धस्तेनावच्छिन्ना प्रतियोगिता यस्यैवंभूतोऽभाव इत्यर्थः पटो घटो नेत्यत्र घटस्य तादात्म्यं घटत्वं तेन सम्बन्धेन अर्थात्स्ववृत्तिघटत्ववत्त्वसम्बन्धेन घटो घटे एव, स्वं घटः तद्वृत्ति घटत्वं तद्वत्त्वस्य घटे एव सत्त्वात् । तथा च स्ववृत्तिघटत्ववत्त्वसम्बन्धेन घटप्रतियोगिकाभाववान् पट इति पटो घटो नेत्यस्यार्थो जातः । स एव पटे घटान्योन्याभाव इत्युच्यते । प्रागभावलक्षणमाह—**विनाश्यभावत्वमिति,** ध्वंसेऽतिव्याप्तिवारणाय विनाशीति, घटादावतिव्याप्तिवारणायाभावत्वमिति । ध्वंसलक्षणमाह—**जन्याभावत्वमिति** । अत्यन्ताभावलक्षणमाह-**नित्येति** नित्यत्वे सति संसर्गाभावत्वमित्यर्थः । ध्वंसादावतिव्याप्तिवारणाय नित्यपदं । नन्वत्यन्ताभावस्य नित्यत्वे घटानयनानन्तरं घटवत्यपि भूतले घटो नास्तीति प्रतीतिः स्यादत आह **यत्र त्विति,** घटादिकमपसारितमिति कथनेन घटात्यन्ताभावसत्त्वं भूतले प्रदर्शितं ।

घटकालस्य संबन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः । तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित् । अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतं, श्यामघटे रक्तो नास्तीति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावम् तयोर्विरोधात् ।

---

**घटकालस्य सम्बन्धाघटकतयेति,** अयमाशयः—घटाभाववत्ताबुद्धिनियामको न केवलं स्वरूपसम्बन्धः, किंतु तद्देशावच्छेदेन घटानधिकरणकालविशिष्टं तत्तद्भूतलादिकमिति समवायनिरूपणावसरे "इत्थं च तत्तत्कालीन" मित्यादिना प्रतिपादितं । तथा च घटाधिकरणकालस्य नैतादृशसम्बन्धघटकत्वं सम्भवतीत्यतः सम्बन्धाभावादेव घटात्यन्ताभावस्य नित्यत्वेऽपि घटाधिकरणकाले न घटात्यन्ताभावबुद्धिरिति । **तत्रेति** यत्र कदाचिदभावज्ञानं भवति कदाचिच्च प्रतियोगिज्ञानं भवति तत्रेत्यर्थः । **चतुर्थोऽयमभाव** इति सामयिकाभाव इत्यर्थः । केचिदित्यनेन च कालविशेषविशिष्टस्वरूपस्याभावसम्बन्धत्वकल्पनादेव घटकाले घटो नास्तीति प्रतीत्यभावोपपत्तौ अतिरिक्तसामयिकाभावे मानाभाव इत्यस्वरसः सूचितः । अत्र नवीनप्राचीनमतभेदं दर्शयति—**अत्र ध्वंसप्रागभावयोरधिकरणे** इति, ननु यदि ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभावः कथं तर्हि रक्तप्रागभावाधिकरणे श्यामघटे रक्तं रूपं नास्ति, एवं श्यामरूपध्वंसाधिकरणे च रक्तघटे श्यामं नास्तीति बुद्धिः ? अत आह—**श्यामघट** इति । **तयोर्विरोधादिति** अत्यन्ताभावेन सह ध्वंसप्रागभावयोर्विरोधादित्यर्थः । अत्र नास्तीति प्रतीतिरत्यन्ताभावावगाहित्वमेवेति शङ्काकर्तुः (नवीनस्य) अभिप्रायः, प्राचीनानां तु तत्र मानाभावान्नास्तीति प्रतीतेर्ध्वंसप्रागभावावपि विषयौ भवत एवेति बोध्यं । ननु यदि रक्तं रूपं नास्तीति प्रतीतिः रक्तध्वंसप्रागभावावगाहिन्यपि भवति तदा पूर्वं रक्ते पुनः पाकेन श्यामे पुनश्च रक्ते पुनश्च श्यामे पुनश्च रक्ते घटे मध्यरक्ततादशायां पूर्वापररक्तरूपध्वंसप्रागभावयोः सत्त्वाद्रक्तेऽपि घटे रक्तं रूपं नास्तीति बुद्ध्यापत्तिरिति नवीनानां तात्पर्य्यादाह—

नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत इति प्राहुः । नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेन्न, अनन्ताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनाया एव लघीयस्त्वात् । एवं च आधाराधेयभावोऽप्युपपद्यते । एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमप्युपपद्यते । अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियैरग्राह्यत्वादप्रत्यक्षत्वं स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः॥

इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते—

**सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥**

समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं समानो धर्म इति फलितार्थः । एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं विरुद्धो धर्म इति फलितार्थः । ज्ञेयत्वं ज्ञानविषयता

---

**नव्यास्त्विति** । तत्र ध्वंसप्रागभावयोः, अत्यन्ताभावेन सहेतिशेषः । प्रभाकरः शङ्कते—**नन्विति** । **अनन्ताधिकरणात्मकत्वकल्पनापेक्षयेति,** तथा च यथा समवायस्थले अनन्तस्वरूपाणां सम्बन्धत्वकल्पनापेक्षया लाघवादतिरिक्तसमवायसिद्धिस्तद्वदिहापि अनन्ताधिकरणेषु अभावत्वकल्पनापेक्षया भावातिरिक्ताभावकल्पनमेवोचितमिति भावः । अभेदे आधाराधेयभावो न सम्भवतीति यो दोषः सोऽप्यस्मिन्मते नास्तीत्याह—**एवं चेति** अधिकरणापेक्षयातिरिक्तत्वे चेत्यर्थः। ननु नैयायिकैरपि अभावाधिकरणकाभावस्य लाघवादधिकरणात्मकत्वमेव स्वीकृतं, तथा च यथा तत्राधाराधेयभावव्यवस्था तथा सर्वत्राप्यस्त्वित्यतो दूषणान्तरमाह—**एवं चेति। अन्यथा** अभावस्याधिकरणात्मकत्वे ।**एतेनेति** पूर्वोक्तेन दूषणेनेत्यर्थः ॥

**इदानीमिति** पदार्थनिरूपणानन्तरं, तदनिरूपणे तत्तत्पदार्थघटितस्य तत्तत्पदार्थस्य साधर्म्यतया निरूपणासम्भवादिति भावः । समानो धर्म्मः सधर्म्मस्तस्य भावः साधर्म्यमेवं विरुद्धो धर्म्मो विधर्म्मस्तस्य भावो वैधर्म्यमिति भ्रमवारणाय बहुव्रीहिमाह—**समानो धर्म्मो येषामिति** । ज्ञेयत्वं किं नामेत्यत आह ज्ञान—

सा च सर्वत्रैवास्ति ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात्। एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥ १२ ॥ १३ ॥

**द्रव्यादयः पञ्च भावा अनेके समवायिनः ।**
**सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥**

द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च। यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम् । तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलि-

---

विषयता । सा ज्ञानविषयता । **केवलान्वयित्वादिति** वृत्तिमदत्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वादित्यर्थः । मूले ज्ञेयत्वादिकमित्युक्तं तत्रादिपदार्थमाह मुक्तावल्यां **एवमभिधेयत्वेति** अभिधेयत्वमभिधाविषयत्वं, अभिधा चात्र सङ्केत एवेति ज्ञेयं । प्रमेयत्वादिकमित्यादिना कालसम्बन्धत्वरूपास्तित्वपरिग्रहः ॥ १२ ॥

अत्र द्रव्यादि पट्कस्य साधर्म्यं भावत्वं तच्च स्पष्टमेवेति तदुपेक्ष्य मूले द्रव्यादीनां पंचानां साधर्म्यं प्रपञ्चितं द्रव्यादय इत्यादिना । **अनेकत्वे सति भावत्वमिति** एवं च मूले द्रव्यादयः पञ्चेत्युद्देश्यपदं, भावा अनेके इति च विधेयपदमिति बोध्यं । **अनेकभाववृत्तीत्यादि** अत्र चानेकत्वं न तावत्संख्यारूपं, गुणादौ तदभावात्, नापि यत्किंचिदेकभिन्नत्वं, समवायेऽतिव्याप्त्यापत्तेः । नापि चैकत्वावच्छिन्नभिन्नत्वं, तत्रापि यदि संख्यारूपमेवैकत्वं तदा समवायस्यापि संख्यारूपैकत्वावच्छिन्नभिन्नत्वेन पूर्वोक्तातिव्याप्तितादवस्थ्यादतोऽत्रानेकत्वं स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वरूपं बोध्यम् । तथा च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वे सति भाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति लक्षणवाक्यस्यार्थोऽवसेयः । अत्र स्वपदेन द्रव्यादिविभाजकधर्म्मावच्छिन्नभेदो यथा पृथिवीभेदः तस्य प्रतियोगिनी पृथिवी तद्वृत्तित्वं द्रव्यत्वस्य, पुनर्द्वितीयस्वशब्देनापि पृथिवीभेद एव तत्सामानाधिकरण्यमपि द्रव्यत्वेऽस्त्येव, इत्येवं सर्वत्र लक्षणसमन्वयो

तोऽर्थः । तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः । समवायित्वं च समवायसंबन्धेन संबन्धित्वं न तु समवायवत्त्वं सामान्यादावभावात् । सत्तावन्त इति । द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः । गुणादिरिति । यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तं तथापि गुणवद्वृत्तिधर्मवत्त्वं कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वंवातदर्थः । नहि घटत्वादिकं द्रव्यत्वं वा गुणवद्वृत्ति कर्मवद्वृत्ति वा किंतु गुणत्वादिकम् । तथा आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ।१४।

---

बोध्यः । तेनेति अनेकभाववृत्तीतिकथनेन। अन्यथा प्रत्येकं घटादौ आकाशादौ चानेकत्वाभावात्तत्राव्याप्तिरेव स्यादितिभावः। समवायीतिपदस्य समवायानुयोगित्वार्थकत्वे सामान्यादौ समवायानुयोगित्वाभावादव्याप्तिः स्यादत आह **समवायित्वं चेति** अत्र समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्वं द्रव्यादिचतुष्कस्य साधर्म्यं बोध्यम् । **सत्तावन्त इतीति** । **गुणादिरितीति** यथा कपालरूपादयः स्वाश्रयसमवेतत्वसम्बन्धेन घटादौ गत्वा तत्र समवायसम्बन्धेन स्वसजातीयं रूपादिकमुत्पादयन्ति तद्वद्रूपादावपि स्वाश्रयसमवायसम्बन्धेन रूपादेः सत्त्वेन तत्रापि रूपादिकं कथं नोत्पादयन्तीत्यतः समवायसम्बन्धेन जायमानं जन्यगुणत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन द्रव्यस्यापि कारणत्वमवश्यं स्वीकर्तव्यं, एवमेव क्रियां प्रत्यपि द्रव्यस्य कारणत्वं बोध्यं । तथा च रूपादौ तादात्म्येन द्रव्यस्याभावादेव न तत्र रूपाद्युत्पत्तिः एवं च घटादेः स्ववृत्तिगुणादिकं प्रति कारणत्वात्कारणस्य च पूर्ववृत्तित्वनियमादाद्यक्षणे घटादौ गुणादिकं नास्तीत्यत आह—**यद्यपीति** । **नहीति** द्वितीयादिक्षणावच्छेदेनैव घटत्वादेः गुणवद्वृत्तित्वाद्द्रव्यत्वस्य तु नित्यगुणवद्वृत्तित्वान्न तदादायातिव्याप्तिरितिभावः । पदार्थविभाजकपदस्य प्रयोजनमाह—**आकाशत्वादिकं त्विति** कर्म्मवद्वृत्त्याकाशत्वाद्युपाधिमादायाकाशादावतिव्याप्तिवारणाय पदार्थविभाजकपदमितिभावः ॥१४॥

**सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।**
**पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥**

सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः । पारिमाण्डल्येति पारिमाण्डल्यमणुपरिमाणं कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् तच्च न संभवति परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्महदारब्धस्य महत्तरत्ववदणुजन्यस्याप्यणुतरत्व-

---

स्वाश्रयसमवायसम्बन्धेन सामान्यादेः सामान्यादावपि सत्वेन सामान्यपरिहीना इति मूलमयुक्तमत आह—**सामान्यानधिकरणत्वमिति** । तथा च स्वाश्रयसमवायादिसम्बन्धस्य वृत्त्यनियामकत्वेन सामान्यादौ न सामान्यनिरूपिताधिकरणतेतिभावः । अप्रसिद्धत्वात्पारिमाण्डल्यपदार्थं निर्वक्ति—**पारिमाण्डल्यमणुपरिमाणमिति** परमाणुद्व्यणुकवृत्तिपरिमाणमित्यर्थः । **कारणत्वं** भावकार्यं प्रतीत्यादि, तेन द्व्यणुकपरिमाणस्य स्वध्वंसं प्रति कारणत्वेऽपि न क्षतिः। तद्भिन्नानामणुपरिमाणभिन्नानां अणुपरिमाणं तु परमाणुद्व्यणुकवृत्तिपरिमाणं त्वित्यर्थः। पारिमाण्डल्यस्याकारणत्वे युक्तिमाह—**तद्धीति** हि यतः तदणुपरिमाणं यदि कस्यचिदारम्भकं भवेत्तदा **स्वाश्रयेति** स्वमणुपरिमाणं तदाश्रयः परमाणुः द्व्यणुकं च तेनारब्धं यद्द्रव्यं द्व्यणुकं त्र्यणुकं च तस्य यत्परिमाणं द्व्यणुकवृत्ति त्र्यणुकवृत्ति वा परिमाणं तस्यारम्भकं द्व्यणुकत्र्यणुकवृत्तिपरिमाणस्यैव जनकं भवेदित्यर्थः । **तच्चेति** अणुपरिमाणस्य स्वाश्रयारब्धद्रव्यपरिमाणारम्भकत्वं त्वित्यर्थः । तत्र हेतुमाह **परिमाणस्येति** । **स्वसमानजातीयेति,** अयमाशयः—परिमाणत्वावान्तरजातयः अणुत्वमहत्वदीर्घत्वह्रस्वत्वभेदाच्चतस्रः । तथा च महत्परिमाणेन यदि परिमाणमारभ्यते तदा स्वसजातीयं नाम महत्वजातिविशिष्टं स्वस्माच्चोत्कृष्टं अर्थात्स्वापेक्षया महत्तरपरिमाणमेव जन्यत इत्यनुभवसिद्धं, तद्वद्यद्यणुपरिमाणमपि परिमाणं जनयेत्तदा स्वसमानजातीयमर्थादणुत्वजातिविशिष्टं स्वस्माच्चोत्कृष्टं

**प्रसङ्गात् । एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम् । ज्ञायमानसामान्यं न प्रत्यासत्तिः । ज्ञायमानं लिङ्गं नानुमितिकारणमित्यभिप्रायेणोक्तम् । आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात्परममहत्परिमाणं**

---

नामाणुतरं परिमाणमेव जनयेत् । एवं च सति त्र्यणुकादेः प्रत्यक्षमेव न स्यात्तेषु महत्त्वाभावादिति दिक् । मूलस्य न्यूनतां परिहरति—**एवमिति** यथा पारिमाण्डल्यं न कस्यापि कारणं तद्वत्परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च, चकाराद्द्व्यणुकरूपमनुत्पाद्यैव नष्टाः परमाणुरूपादयः न कस्यापि कारणमिति बोध्यं इत्यर्थः । ननु योगिप्रत्यक्षेऽणुपरिमाणस्याप्यस्मदादीनां घटप्रत्यक्षे घट इव विषयविधया कारणत्वात्पारिमाण्डल्यभिन्नानामित्ययुक्तमुक्तमत आह—**इदमपीति** पारिमाण्डल्यभिन्नानां कारणत्वसाधर्म्यकथनमपीत्यर्थः । योगिप्रत्यक्षे विषयस्य न कारणत्वमित्यभिप्रायेणोक्तमिति परेणान्वयः । योगिनां यथातीतादिवस्तुविषयकप्रत्यक्षे विषयाभावान्न विषयस्य कारणत्वं तद्वद्वर्तमानविषयकमपि योगिप्रत्यक्षं योगजधर्म्मेणैव सम्भवतीति न तत्र विषयस्य कारणत्वकल्पनं, अस्मदादिप्रत्यक्षस्य तु विषयाभावे कुत्राप्यनुत्पन्नत्वात्तत्रावश्यकं विषयस्य कारणत्वकल्पनमितिभावः । ननु सामान्यलक्षणया मनस्त्वेन रूपेण निखिलमनसां बोधे मनस्त्वस्य सम्बन्धविधया कारणत्वात्, परमाणुभेदाद्यनुमितौ विशेषस्य च हेतुविधया कारणत्वादतीन्द्रियसामान्यादेरकारणत्वकल्पनमयुक्तमत आह—**ज्ञायमानमिति** वर्तमानकालीनज्ञानविषयीभूतं सामान्यं न प्रत्यासत्तिः, किंतु सामान्यज्ञानं प्रत्यासत्तिरित्यर्थः । एवं ज्ञायमानं लिङ्गं नानुमितिकारणं किंतु लिङ्गज्ञानं कारणमिति नवीनाभिप्रायेणोक्तमित्यर्थः । एतत्तत्त्वं त्वग्रे स्फुटीभविष्यति । **आत्ममानसेति** आत्मनो यन्मानसं प्रत्यक्षमहं सुखीत्याद्याकारकं तत्र **आत्मपरममहत्त्वस्येति** द्रव्यविषयकलौकिकप्रत्यक्षे समवायेन महत्त्वस्य कारणत्वादितिभावः । **आकाशादेरिति** नन्वाकाशवृत्तिपरममहत्परिमाणस्यापि शब्दप्रत्यक्षं प्रति

आकाशादेर्बोध्यम्। तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये, तन्न, ज्ञानातिरिक्तं प्रत्येव कारणताया आचार्यैरुक्तत्वात् ॥ १५ ॥

ननु कारणत्वं किम्, अत आह—

**अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ॥**

---

स्वाश्रयसमवायसम्बन्धेन कारणत्वात्परममहत्परिमाणमाकाशादेर्बोध्यमित्यपि न सङ्गतमिति चेन्न, अणुवृत्तिरूपादिप्रत्यक्षापत्तिवारणाय द्रव्यसमवेतवृत्तिलौकिकप्रत्यक्षं प्रति महत्त्वस्य स्वातन्त्र्येण कारणत्वेऽपि पृथिवीपरमाणौ पृथिवीत्वस्य प्रत्यक्षापत्तिः स्यादतः सन्निकर्षघटकीभूतेन्द्रियसम्बन्ध एव महत्त्वावच्छिन्नत्वविशेषणं देयं। तत्राप्यन्धकारादौ घटचक्षुःसंयोगे सति स्पार्शनापत्तिवारणाय द्रव्यचाक्षुषं प्रति महत्त्वाद्यवच्छिन्नचक्षुःसंयोगस्य, द्रव्यसमवेतचाक्षुषं प्रति महत्त्वाद्यवच्छिन्नचक्षुःसंयुक्तसमवायस्य, रसविषयकरासनप्रत्यक्षं प्रति महत्वाद्यवच्छिन्नरसनासंयुक्तसमवायस्य, एवं घ्राणजादिप्रत्यक्षेऽपि विशिष्यैव कार्य्यकारणभावो वाच्यो, न तु सामान्यरूपेणापीत्यग्रे स्फुटीभविष्यति, तथा च शब्दप्रत्यक्षं प्रति केवलं श्रोत्रावच्छिन्नसमवायस्यैव कारणत्वे न किंचिदनुपपन्नमतो न तत्र महत्त्वस्य कारणत्वमस्तीत्याशयादेवात्मपरममहत्त्वस्यापि न कारणत्वमिति कैश्चित्सिद्धान्तितमिति दिक्। वस्तुतस्तु महत्त्वं षड्विधे हेतुरिति मूलेन लाघवात्षड्विधप्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वस्य कारणताया अग्रे वक्तव्यतया आकाशादेरित्यस्यातद्गुणसंविज्ञानबहुव्रीहिकरणात्कालदिशोः परिमाणं बोध्यमित्यर्थः। **तस्यापीति** अनुपदोक्तयुक्त्या आत्मपरममहत्परिमाणस्यापि न कारणत्वमित्यर्थः। **ज्ञानातिरिक्तं प्रतीति,** तथा च ज्ञानातिरिक्तभावकार्यं प्रत्येव पारिमाण्डल्यादीनां न कारणत्वमित्याचार्याणामाशयादात्ममानसप्रत्यक्षे च आत्मपरममहत्त्वस्य कारणत्वादत्र परममहत्परिमाणमाकाशादेरेव बोध्यमित्यन्यत्र विस्तरः॥ १५ ॥

कारणत्वनिरूपणे प्रसङ्गसङ्गतिं दर्शयति–**नन्विति**। **अन्यथासिद्धीति** तथा चान्यथासिद्धिशून्यस्य वस्तुनः या नियता नाम कार्यसमानाधिकरणा-

**कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥**

**समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्**

**एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥१७॥**

तस्य कारणत्वस्य ॥ १६ ॥ १७ ॥

**यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत्**

**तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥१८॥**

तत्रेति । समवायिकारणे आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात् । एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं

---

त्यन्ताभावाप्रतियोगिनी पूर्ववर्तिता नाम कार्याव्यवहितपूर्ववर्तिता तत्कारणत्वं भवेदिति मूलार्थः पर्य्यवसितः ॥ १६ ॥

अन्यशास्त्रेषु निमित्तकारणमुपादानकारणं चेति कारणद्वैविध्यमेवोक्तमतो मूले आह—एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वमिति ॥ १७ ॥

मुक्तावल्यां **अत्र यद्यपीति** यस्मिन्समवायसम्बन्धेन यत्कार्य्यमुत्पद्यते तत्कार्य्यं प्रति तस्य समवायिकारणत्वं तस्मिन्समवायिकारणे प्रत्यासन्नत्वे सति यत्कारणं तदसमवायिकारणमित्यसमवायिकारणलक्षणे स्वीकृते सति, यद्यपि तुरीतन्तुसंयोगानां पटसमवायिकारणतन्तुसमवेतत्वात पटासमवायिकारणत्वं स्यादित्यर्थः । **एवं वेगादीनामपीति** अत्र यद्यपि तुरीतन्तुसंयोगस्य पटासमवायिकारणत्वे तुरीतन्तुसंयोगनाशात्पटनाशापत्तिः सम्भवति, द्व्यणुकनाशान्यथानुपपत्त्याऽसमवायिकारणनाशाद्द्रव्यनाशस्य सिद्धान्तसिद्धान्तित्वात्, अतस्तत्र पटासमवायिकारणलक्षणस्यातिव्याप्तिप्रदर्शनं तत्परिहारश्च ग्रंथकर्तुः समुचित एव, परंतु वेगादीनामभिघाताद्यसमवायिकारणत्वे ज्ञानादीनामिच्छाद्यसमवायिकारणत्वेऽपि च न किमपि दूषणमुत्पश्यामोऽतस्तत्रा-

स्यात् । एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात् । तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम् । तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति, तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम् । आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव । अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च । आद्यं यथा । घटादिकं प्रति कपालसंयोगादिकम-

---

समवायिकारणलक्षणस्यातिव्याप्तिप्रदर्शनं तत्परिहारश्च ग्रंथकर्तुर्विफल इव प्रतिभाति, तथापि संयोगजसंयोगाद्भिन्नसंयोगं प्रति लाघवात्क्रियाया एवासमवायिकारणत्वं, एवं ज्ञानं प्रत्यात्ममनःसंयोगस्यासमवायिकारणत्वं निर्विवादं, तस्यैव च लाघवादिच्छादिकं प्रत्यप्यसमवायिकारणत्वमिति नैयायिकसिद्धान्तमनुरुध्यैव पूर्वोक्तातिव्याप्तिद्वयप्रदर्शनं तत्परिहारश्चेति बोद्धव्यं । वेगादीनामित्यादिना स्पर्शसंग्रहः । अभिघातादीत्यादिना नोदनपरिग्रहः । ज्ञानादीत्यादिनेच्छापरिग्रहः इच्छादीत्यादिना च प्रवृत्तेः परिग्रहणं । **तथापीति तुरीतन्तुसंयोगभिन्नत्वमिति** तन्तुमात्रसमवेतत्वे सति कारणत्वं पटासमवायिकारणत्वमित्यर्थः । तुरीतन्तुसंयोगस्य च तन्तुमात्रसमवेतत्वाभावान्न तत्रातिव्याप्तिरितिभावः । ननु पटासमवायिकारणलक्षणे मात्रपदप्रक्षेपापेक्षया सामान्यलक्षण एव तुरीतन्तुसंयोगभिन्नत्वं कथं न निवेश्यत इत्यत आह **तुरीतन्तुसंयोगस्त्वति । तत्तदिति** तत्तत्कार्यस्य पटादिकार्य्यस्यासमवायिकारणलक्षण एव तत्तद्भिन्नत्व तुरीतन्तुसंयोगादिभिन्नत्वं देयं न तु सामान्यलक्षण एव । **कार्य्यैकार्थेति** कार्य्येण स्वकार्य्येण सहैकास्मिन्नर्थे प्रत्यासत्तिः समवायः कार्य्यैकार्थप्रत्यासत्तिः, एवं कारणेन स्वसमवायिकारणेन सहैकास्मिन्नर्थे प्रत्यासत्तिः समवायः, उभयप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नत्वमेव घटयति—**आद्यं यथेत्यादिना** । तदेव स्पष्टयति—**तथा चेत्यादिना** । फलित-

समवायिकारणम् । तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । द्वितीयं यथा । घटरूपं प्रति कपालरूपमसमवायिकारणम् । तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । तथा च क्वचित्समवायसंबन्धेन क्वचित्स्वसमवायिसमवेतत्वसंबन्धेनेति फलितोऽर्थः । इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम् । आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥ १८ ॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—

**येन सह पूर्वभावः कारणमादाय वा यस्य ।**
**अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् १९**
**जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।**
**अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः २०**

यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः । यथा घटं प्रति दण्डत्वमिति ॥ द्वितीलक्षणमाह—इत्थं चेति समवायस्वाश्रयसमवायान्यतरसम्बन्धेन समवायिकारणे प्रत्यासन्नत्वे सति आत्ममात्रसमवेताभिन्नत्वे च सति कारणत्वमसमवायिकारणत्वमिति सामान्यलक्षणं पर्यवसितं बोद्धव्यं । आभ्यामित्यादि समवायिकारणताऽसमवायिकारणताभ्यां भिन्नकारणतावत्त्वमित्यर्थः तेन कालपिण्डसंयोगं प्रति कालस्य समवायिकारत्वेऽपि न तस्य कार्य्यमात्रं प्रति निमित्तकारणत्वव्याघात इति दिक् ॥ १८ ॥

**यत्कार्य्यं प्रतीति** यद्धर्मावच्छिन्नं प्रतीत्यर्थः । **येन रूपेणेति** यद्धर्मावच्छिन्नेन । तदेव घटयति—**यथेति** । **यस्य स्वातन्त्र्येणेति** । **किंतु कारणमिति**

यमन्यथासिद्धमाह कारणमिति । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम् । यथा दण्डरूपम् ॥ तृतीयमाह अन्यं प्रतीति । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटादिकं प्रत्याकाशस्य । तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात् । आकाशत्वं हि शब्दसमवायिकारणत्वम् । एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् ॥ ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्, पञ्चमीति गृहाण। नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत्कत्वत्वादिकं विशेषपदार्थो वेति ॥ चतुर्थमन्यथासिद्धमाह । जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वे एवान्यथासिद्धिः ।

---

स्वकारणमित्यर्थः । कारणत्वं चात्र पृथगन्वयव्यतिरेकशालित्वं, तेन कारणताकुक्षावन्यथासिद्धिप्रवेशेऽपि नात्माश्रयः । यद्यप्यत्रेतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वमित्युक्तौ प्रथमद्वितीयान्यथासिद्धयोः सङ्ग्रहः सम्भवति, तथापि भेदेनान्यथासिद्धिद्वयप्रदर्शनं शिष्यबुद्धिवैशद्यार्थमिति बोध्यम् । द्वितीयान्यथासिद्धिमुदाहरति—**यथा दण्डरूपमिति** । **तृतीयमाहेति** । **अन्यं प्रतीति** फलाजनकं प्रकृतकार्यादन्यं प्रतीत्यर्थस्तेन न चतुर्थान्यथासिद्धे कुलालजनकेऽतिव्याप्तिः । तदेव घटयति—**यथेत्यादिना** । तस्याकाशस्य । **एवं चेति** आकाशत्वेन कारणत्वस्वीकारे चेत्यर्थः । शङ्कते नन्वित्यादिना शब्दकारणत्वज्ञानाभावदितिभावः । उत्तरयति—**पञ्चमीति** । **कत्वत्वादिकमिति** त्रिनिगमनाविरहेण बहूनां वर्णानां कारणतावच्छेदकत्वकल्पने गौरवादाह-**विशेषपदार्थो वेति** । **चतुर्थमन्यथासिद्धमाहेति, यत्कार्य्यजनकं प्रतीति** फलजनकमन्यं

कुलालत्वेन जनकत्वे स्विष्टापत्तिः, कुलालमात्रस्य घटं प्रति जनकत्वात् ॥ पञ्चममन्यथासिद्धमाह । अतिरिक्तमिति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम् अनेकद्रव्यत्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेकद्रव्यत्वमन्यथासिद्धम् । न च वैपरीत्ये किं विनिगमकमिति वाच्यम्, महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ १९ ॥ २० ॥

**एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।**
**घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥**

---

प्रतीत्यर्थः । **अवश्यक्लृप्तेति** अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नमन्यथासिद्धमित्यर्थः । अवश्यक्लृप्तश्चात्र लघुत्वे सतीतरनिखिलतत्कार्यकारणसत्त्वे यदभावात्तत्कार्याभावः स तत्रावश्यक्लृप्तः । लघुत्वं च शरीरकृतमुपस्थितिकृतं सम्बन्धकृतं चेति । तत्र प्रथममनेकद्रव्यत्वापेक्षया महत्त्वे महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् । द्वितीयं गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे, तत्राभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वाद्गन्धज्ञाने गन्धप्रागभावस्यैव प्रथमोपस्थितत्वात् । घटं प्रति स्वाश्रयजन्यभ्रमिवत्त्वसम्बन्धेन दण्डत्वस्य कारणत्वकल्पनापेक्षया स्वजन्यभ्रमिवत्त्वसम्बन्धेन दण्डस्य कारणत्वकल्पने च तृतीयम् । ननु ग्रन्थान्तरेष्वन्यत्रक्लृप्तेति दृश्यते तत्कथमत्रावश्यक्लृप्तेति कृतमत आह—**अत एवेति** अन्यथा महत्त्वानेकद्रव्यत्वयोः समनियतत्वेन महत्त्वेनानेकद्रव्यत्वस्यान्यथासिद्धत्वं न स्यादितिभावः । अथवाऽवश्यक्लृप्तेत्यस्य लघ्ववश्यक्लृप्तत्वपरत्वमेव स्पष्टयति—**अत एवेत्यादिना । वैपरीत्येति** अनेकद्रव्यत्वमेव कारणं महत्त्वं त्वन्यथासिद्धमिति वैपरित्य इत्यर्थः । **महत्त्वत्वजातेरिति** अनेकद्रव्यत्वं चात्राणुभिन्नद्रव्यत्वं तथा चैतादृशानेकद्रव्यत्वत्वापेक्षया महत्त्वत्वजातेरेव कारणतावच्छेदकत्वकल्पनमुचितमितिभावः ॥ १९–२० ॥

**तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।**
**पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥२२॥**

रासभादिरिति । यद्यपि यत्किंचिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववर्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे रासभोऽन्यथासिद्ध इति भावः । एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात् । तथाहि । दण्डादिभिरवश्यक्लृप्तप्रातिनियतपूर्ववर्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम् । न च वैपरीत्ये किं विनिगमकमिति वाच्यम्, दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः संबन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं संभवतीति ॥ २१ ॥ २२ ॥

---

एतेष्विति । परेषामिति दण्डत्वदण्डरूपादीनां च संग्रह इत्यर्थः । तदेव घटयति—तथाहीत्यादिना, अयमाशयः—यथा घटं प्रति दण्डः कारणं तथैव दण्डत्वादिकमपीतितु वक्तुमेव नोचितं दण्डादिरूपेतरानिखिलकारणसत्त्वे दण्डत्वाभावाद्घटाभावस्य वक्तुमनुचितत्वेन दण्डत्वे घटनिरूपितावश्यक्लृप्तत्वस्यैवाभावात् । किंतु घटं प्रति स्वजन्यभ्रमिवत्त्वसम्बन्धेन दण्डः कारणं स्वाश्रयदण्डजन्यभ्रमिवत्त्वसम्बन्धेन दण्डत्वादिकं वा कारणमित्यत्र विनिगमकाभावेनोभयोरपि कारणत्वं प्राप्नोति, तत्र दण्ड एव कारणं दण्डत्वादिकं त्वन्यथासिद्धमिति हि सिद्धान्तः । तत्र प्रथमतः शिष्यबुद्धिवैशद्यार्थं दण्डत्वादीनामन्यथासिद्धत्वं येन सह पूर्वभाव इत्यादिना भिन्नभिन्नतया प्रदर्शितं, संप्रति दण्डत्वादीनां सर्वेषां पञ्चमान्यथासिद्धेनैव चरितार्थत्वं घटयति तथाहीत्यारभ्य कारिकाव्याख्यासमाप्तिपर्यन्तं, तथाहि घटं प्रति दण्डत्वस्य कारणत्वं स्वाश्रयदण्डजन्यभ्रमिवत्त्वसम्बन्धेन वक्तव्यं, दण्डस्य तु केवलं स्वजन्यभ्रमिवत्त्वसम्बन्धेनेति सम्बन्धकृतलाघवाद्दण्ड एव घटं प्रत्यवश्यक्लृप्तस्तेन तद्भिन्नं दण्डत्वादिकमन्यथासिद्धं, एवमेव दण्डरूपस्याप्यन्यथासिद्धत्वं बोध्यम् । दण्डादिरूपेतरनिखिलघटकारणसत्त्वे

**समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।**
**गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥२३॥**

समवायीति—स्पष्टं । गुणकर्मेति । असमवायिकारणत्व गुणकर्मभिन्नानां वैधर्म्यं न तु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम् । अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः । तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि न क्षतिः ॥ २३ ॥

---

आकाशाभावाद्घटाभावस्यादृष्टचरत्वेन न घटं प्रत्याकाशस्यावश्यक्लृप्तत्वमित्याकाशः घटं प्रत्यन्यथासिध्धः । यद्यप्येवं शब्दं प्रत्यप्याकाशस्यान्यथासिध्धत्वं स्यादभिघातादिरूपेतरनिखिलशब्दकारणसत्त्वे आकाशाभावाच्छब्दाभावस्यापि वक्तुमशक्यत्वात्, तथाप्याकाशस्य शब्दसमवायिकारणत्वेनैवाग्रे साधयिष्यमाणत्वान्न शब्दं प्रत्यप्याकाशस्यान्यथासिद्धत्वमिति ध्येयम् । एवं कुलालपितुः घटं प्रति कारणत्वं स्वजन्यकुलालजन्यकृतिमत्त्वसम्बन्धेन वक्तव्यं, कुलालस्य तु स्वजन्यकृतिमत्त्वसम्बन्धेनैवेति सम्बन्धकृतलाघवात्कुलालस्य घटं प्रति कारणत्वं, तत्पितुस्त्वन्यथासिद्धत्वमिति सर्वेषामेवान्तर्भावाद्भेदेनान्यथासिध्धिपञ्चकप्रदर्शनं शिष्यबुध्धिवैशद्यार्थमेवेतिभावः । तथा च कारणलक्षणे दण्डत्वादावतिव्याप्तिवारणायान्यथासिध्धिशून्यत्वे सतीति, अनियतरासभादिवारणाय च नियतेति इति दिक् ॥ २१–२२ ॥

**स्पष्टमिति** समवायिकारणत्वमित्यादिमूलस्य समवायिकारणत्वं द्रव्यस्यैव भवतीत्यर्थः स च स्पष्ट एवेति न तत्र प्रयास इत्यर्थः । नन्वात्मविशेषगुणानां कुत्राप्यसमवायिकारणकत्वाभावान्मूले गुणकर्म्मणोर्यदसमवायिकारणत्वं साधर्म्यमुक्तं तदयुक्तमतो वैधर्म्यपरतया मूलं व्याचष्टे—**असमवायिकारणत्वं गुणकर्म्मभिन्नानां वैधर्म्यमिति** । ननु साधर्म्यप्रकरणे वैधर्म्यकथनमयुक्तमत आह—**अथवेति** । द्रव्यत्वमादाय द्रव्येऽतिव्याप्तिवारणायासमवायिकारणवृत्तीति । सत्तामादाय तत्रैवातिव्याप्तिवारणाय सत्ताभिन्नेति । द्रव्यगुणान्यतरत्वमादाय तत्रैवातिव्याप्तिवारणाय च जातीति ॥ २३ ॥

**अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।**

नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसंबन्धेन वृत्तिमत्त्वम् । विशेषणतया नित्यानामपि कालादौ वृत्तेः ।

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते क्षित्यादीनामिति ।

**क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥२४॥**

**क्षितिर्जलं तथा तेजः पवनो मन एव च ।**

**परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥**

स्पष्टं पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं क्रियावत्त्वं वेगवत्त्वं च साधर्म्यम् । नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यं, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वम्, तच्च तेषामेव,

---

ननु गगनादीनामपि गगनादिकं सर्वदैवास्तीति व्यवहारात्कालादौ वृत्तिमत्त्वादन्यत्र नित्यद्रव्येभ्य इति मूलमयुक्तमत आह—**आश्रितत्वमिति । समवायादिसम्बन्धेनेति** सर्वाधारतानियामकसम्बन्धातिरिक्तसम्बन्धेनेत्यर्थः । **विशेषणतयेति** कालिकदैशिकसम्बन्धेन । क्षित्यादीनां नवानां त्विति मूलस्थतुशब्दस्यार्थं प्रकटयति—**इदानीमित्यादिना । स्पष्टमिति** प्राग्वत् ॥ २४ ॥

दिक्कृतपरत्वापरत्वयोर्हेतुरयमस्मादेतदपेक्षया बहुतरमूर्तसंयोगानुयोगीत्याद्यपेक्षाबुद्धिः, कालकृतयोश्चायं बहुतरसूर्यपरिस्पन्दाश्रयः इत्याद्यपेक्षाबुद्धिर्यत्र नोत्पन्ना तत्र परत्वापरत्वयोरनुत्पादादव्याप्तिमाशङ्क्य निषेधति **न चेत्यादिना** । आत्मन्यतिव्याप्तिवारणाय परत्वादिसमानाधिकरणेति । सत्तामादाय तत्रैवातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । स्वस्य स्वव्याप्यत्वे तु द्रव्यत्वभिन्नत्वेनापि जातिर्विशेषणीया, तेन न द्रव्यत्वव्याप्यद्रव्यत्वमादायाकाशादावतिव्याप्तिः । वस्तुतस्तु द्रव्यत्वन्यूनवृत्तित्वमेवात्र द्रव्यत्वव्याप्यत्वमिति न द्रव्य-

गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात्। पूर्ववत् कर्मवत्त्वम् कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २४ ॥ २५ ॥

**कालखात्मदिशां सर्वगतत्वं परमं महत् ।**
**क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्तिहि ॥२६॥**

कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्तसंयोगित्वं च परममहत्त्वत्वं जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा। क्षित्यादीति। पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम्। तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्। तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वति आत्मनि नातिव्याप्तिः। नवा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि

---

त्वमादायातिव्याप्तिलेशोऽपीति द्रष्टव्यम्। **अपकृष्टपरिमाणवत्त्वं** विभ्ववृत्ति परिमाणवत्त्वं। क्रियासमवायिकारणतावच्छेदकतया मूर्तत्वं जातिविशेष इत्यपि वदन्ति। **तच्चेति** मूर्तत्वं त्वित्यर्थः ॥ २५ ॥

कालादौ क्रियारूपगमनस्यासम्भवादाह—**सर्वगतत्वं सर्वमूर्तसंयोगित्वमिति**। परममहत्त्वत्वस्य जातित्वे प्रमाणाभावः इति मतेऽप्याह—**अपकर्षानाश्रयेति**। **तच्चेति** भूतत्वं चेत्यर्थः। **बहिरिन्द्रियेति** बहिरिन्द्रियग्राह्यजातीयविशेषगुणवत्त्वमित्यर्थः, तेन न परमाण्वादावव्याप्तिः। **अत्रेति**। **तेनेति** लौकिकप्रत्यक्षविषयत्वविवक्षणेनेत्यर्थः। **ज्ञानस्यापीति** अयं घट इत्यादि ज्ञानस्यापि। **उपनीतभानविषयत्वात्** ज्ञातज्ञानविषयत्वादित्यर्थः। **तद्वति** अयं घट इत्यादि ज्ञानवतीत्यर्थः। तथा च मया घटो ज्ञात इति ज्ञानस्यायं घट इति ज्ञानांशे न लौकिकी विषयता, चक्षुरादेस्तत्र लौकिकसन्निकर्षाभावात, किं तु चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वरूपज्ञानलक्षणानामकसन्निकर्षसत्त्वादलौकिकविषयत्वमेवेति न तदादायात्मन्यतिव्याप्तिरितिभावः। स्वरूपयोग्यत्वप्रवेशस्य फलमाह—**न वेति**, तस्यापि परमाणुरूपादेरपीत्यर्थः। ननु परमाणुरूपादे

स्वरूपयोग्यत्वात् । महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम् । अथवा आत्मावृत्तिविशेषगुणवत्त्वं तत्त्वम् । चत्वारीति । पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम् ॥ २६ ॥

**द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।**
**अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥२७॥**

पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वम् । नच द्रव्यानारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । आकाशशरीरिणामिति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः । आकाशस्य विशेषगुणः शब्दः, स चाव्याप्यवृत्तिर्यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदान्यावच्छेदेन तदभावस्यापि सत्त्वात् । क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्प्रथमशब्दस्य

---

योग्यत्वे तस्य कुतो नाध्यक्षमत आह—**महत्त्वलक्षणेति** । चक्षुरादिगतरूपादीनामनुद्भूतत्वेन चक्षुरादावव्याप्तिमाशंक्य लाघवाच्चाह **अथवेति** ॥ २६ ॥

**द्रव्येति** द्रव्यस्य यत्समवायिकारणं कपालादिस्तद्वृत्तिर्या द्रव्यत्वव्याप्यजातिः पृथिवीत्वादिर्जातिस्तद्वत्त्वं घटादावपीति सर्वत्र लक्षणसमन्वयः । **आकाशात्मनामिति** लक्ष्ये लक्षणसमन्वयार्थं शब्दज्ञानादीनामव्याप्यवृत्तित्वं क्षणिकत्वं चोपपादयति **आकाशस्येत्यादिना** । ननु नैयायिकमते क्षणिकस्य विशेषगुणस्यासम्भवात् क्षणिकविशेषगुणवत्त्वमसम्भवितमत आह—**क्षणिकत्वं चेति** स्वोत्पत्तितृतीयक्षणजन्यध्वंसप्रतियोगित्वमित्यर्थः । **स्वोत्तरवृत्तीति** स्वाव्यवहितोत्तरवर्तीत्यर्थः । अव्यवहितोत्तरत्वं च स्वाधिकरणक्षणवृत्तिप्रागभावप्रतियोगिविशेषगुणानुत्तरत्वे सति स्वोत्तरत्वं । तथा चैतत्क्षणवृत्तियोग्यविभुविशेषगुणनाशं प्रति एतत्क्षणाव्यवहितोत्तरवृत्तियोग्यविभुविशेषगुणस्य सामानाधिकरण्येन कारणत्वमिति पर्य्यवसितं । चरमज्ञानादिकं तूत्तरक्षणवृत्तित्वविशिष्टं स्वमेव स्वस्य नाशकम् । अत्र कार्य्यतावच्छेदके योग्यत्वोपादानान्ना-

**द्वितीयशब्देन नाशः । एवं ज्ञानादीनामपि ज्ञानादिकं यदात्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्थं चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः । पृथिव्यादौ रूपादिविशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम् । पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीत्यतो विशेषगुणेत्युक्तम् । नच रूपादीनामपि कदाचित्तृतीयक्षणे नाशसंभवात्क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यं, चतुःक्षणवृत्तिजन्याद्य-**

---

दृष्टस्य प्रायश्चित्तादिना नाशेऽपि व्यभिचारः । रूपादिनाशे व्यभिचारवारणाय विभ्विति । संयोगादिनाशे व्यभिचारवारणाय विशेषेति । कारणतावच्छेदके च योग्यत्वविशेषत्वयोरुपादानान्नादृष्टेन संयोगादिना च तृतीयक्षणेऽपेक्षाबुद्धिनाशः । वस्तुतस्तु चरमज्ञाननाशं प्रति यथोत्तरकालवृत्तित्वविशिष्टं स्वमेव स्वस्य नाशकमिति तृतीयक्षणे एव तन्नाशो भवति, तद्वदपेक्षाबुद्धेरपि तृतीयक्षणे नाशापत्तिस्तद्वारणायापेक्षाबुद्धिनाशं प्रति द्वित्वप्रत्यक्षस्यापि कारणत्वमवश्यं वक्तव्यं एवं च सति कारणतावच्छेदके योग्यत्वविशेषत्वयोरनुपादानेऽपि न किमपि दूषणमिति ध्येयम् । न च कारणतावच्छेदके योग्यत्वविशेषत्वयोरनुपादाने पूर्वमात्मनि विद्यमानेन क्वचित् ज्ञानात्तृतीयक्षणवृत्तिध्वंसप्रतियोगिनादृष्टेन संयोगादिना वा द्वितीयक्षण एव कथं न ज्ञानादेर्नाश इति वाच्यं, ज्ञानाद्द्वितीयक्षणावच्छेदेन तत्रोत्तरक्षणवृत्तित्वेऽपि पूर्वं तत्रोत्तरक्षणवृत्तित्वाभावादिति यत्किञ्चिदेतत् । शब्दस्याव्याप्यवृत्तित्वक्षणिकत्वे उपपाद्य ज्ञानस्याप्युपपादयति **एवमित्यादिना** । तदेव घटयति—**ज्ञानादिकमित्यादिना** । निष्कृष्टं लक्षणद्वयमाह **इत्थं चेत्यादिना** । अव्याप्यवृत्तित्वं चात्र तदधिकरणक्षणावच्छेदेन तत्समानाधिकरणात्यन्ताभावप्रतियोगित्वरूपं बोध्यमन्यथा रूपादीनामपि कालिकाव्याप्यवृत्तित्वात्तद्वति पृथिव्यादावतिव्याप्तिः स्यादेव । विशेषपदस्य कृत्यमाह—**पृथिव्यादाविति । चतुः क्षणवृत्तीति** चतुःक्षणवृत्तीनि यानि जन्यानि घटादीनि तेष्ववृत्तिर्या जातिः ज्ञानत्वादिस्तद्वान् विशेषगुणो

त्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात् । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति, क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिकं तिष्ठति । रूपत्वादिकं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः। ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम् । यद्याकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयं, द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयात्, परममहत्त्वस्य तादृशगुणत्वाच्चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद्-द्वित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति । त्रिक्षणवृत्तित्वं वा

---

ज्ञानादिस्तद्वत्त्वस्यात्मादौ सत्त्वाल्लक्षणसमन्वयः । अत्र ज्ञानत्वादेर्जन्यवृत्तित्वा-दसम्भववारणाय वृत्यन्तं । जन्यावृत्तित्वं चात्र समवायेन, तेन कालिकेन ज्ञानत्वादेः घटादौ वृत्तित्वेऽपि न क्षतिः । **तदर्थत्वादिति** क्षणिकविशेष-गुणवत्त्वस्यार्थत्वादित्यर्थः । ननु प्रथमोपस्थितत्वरूपलाघवसत्त्वात्त्रिक्षणवृत्ति-त्वमेव कथं नोक्तमतआह—**अपेक्षाबुद्धिरिति** । तथा च ज्ञानत्वमादा-यापि लक्षणसमन्वयो भवत्विव्येतदर्थमेव त्रिक्षणवृत्तित्वं विहाय चतुःक्षण-वृत्तित्वमुक्तं, न त्वसम्भवादिवारणार्थं, त्रिक्षणवृत्तित्वोक्तावपच्छिन्नत्वादिकमादा-यात्मनि लक्षणसमन्वयसम्भवादितिभावः । रूपादीनामपीत्यादिना ग्रन्थेन पृथि-व्यादौ पूर्वोक्तामतिव्याप्तिं वारयति, रूपत्वादिकं त्वित्यादिना **तद्व्युदासः** रूपत्वा-दिजातिव्युदासः। तथा च न पूर्वोक्तातिव्याप्तिरितिभावः। जन्यपदस्य कृत्यमाह—**ईश्वरज्ञानस्येति**। मूलोक्तशरीरिपदस्य जीवात्ममात्रपरत्वादाह—**यद्याकाशजीवा-त्मनोरिति**। विशेषपदकृत्यमाह **परममहत्त्वस्येति** तादृशगुणत्वाच्चतुःक्षणवृत्ति-जन्यावृत्तिजातिमद्गुणत्वादित्यर्थः। तथा च विशेषपदानुपादाने तामादाय कालदिशोरति व्याप्तिः स्यादितिभावः । नन्वहं महानिति प्रतीत्यभावेन परममहत्त्वत्वं न जातिः, किं त्वपकर्षानाश्रयपरिमाणत्वं, तथा च तामादाय कथमतिव्याप्तिरत आह—**चतुर्थक्षणे द्वित्वादीनामपीति**, यद्वा जन्यत्वाप्रवेशपक्षेऽपि विशेषपदस्य कृत्यमाह—**चतुर्थक्षणे द्वित्वादीनामपीति** । **तथात्वादिति** पूर्वोक्तजातिमद्गुणत्वादित्यर्थः। **तद्वारणायेति** तादृशजातिमद्गुणं द्वित्वादिकमादाय यातिव्याप्तिस्तद्वारणाये-

वाच्यम् । इच्छात्वादिकमादायात्मनि लक्षणसमन्वयः ॥ २७ ॥

**रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।**
**गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥**

पृथिव्यप्तेजसां रूपवत्त्वं, द्रवत्ववत्त्वं, प्रत्यक्षविषयत्वं चेत्यर्थः । न च चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपत्त्वे किं मानमिति वाच्यं, तत्रापि तेजस्त्वेन रूपानुमानात् । एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम् । न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यं, द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । घृतजतुप्रभृतिषु पृथिवीषु, जलेषु, द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्षणसमन्वयः । न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तमतिव्याप्तं च रूपादाविति वाच्यं, लौकिकचाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति । गुरुणी इति । गुरुत्ववत्त्वं रसवत्त्वं पृथिवीजलयोरित्यर्थः । न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानां च रसादिमत्त्वे किं मानमिति वाच्यं, तत्रापि पृथिवीत्वादिना तदनुमानात् । द्वयोरिति । पृथिवीतेजसोरित्यर्थः । न च नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यं, नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ २८ ॥

---

त्यर्थः । प्रथमोपस्थितत्वरूपलाघवादाह त्रिक्षणेति ॥ २७ ॥

**नचेति** चक्षुरादीत्यादिना घ्राणादेः परिग्रहणम् । **तत्रापि** चक्षुरादावपि **तेजस्त्वेनेति** चक्षुः रूपवत्तेजस्त्वादग्निवदित्याद्यनुमानेन चक्षुरादावपि रूपवत्त्वसिद्धिर्भवतीति भावः । पृथिव्यादौ द्रवत्ववत्त्वमुपपादयति—**घृतजत्वित्यादिना** । ननु परमाण्वादावपि योगिप्रत्यक्षविषयत्वमस्त्येवेत्यत आह—**अतिव्याप्तं चेति** । **नच घ्राणेन्द्रियादीनामिति** । **तत्रापि** घ्राणादावपि, **तदनुमानाद्रसानुमानात्** ॥ २८ ॥

आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।

पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः ।

यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥

ज्ञेयत्वादिकं विहायेति बोध्यम् । तत्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात् ॥ २९ ॥

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुक्ताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥३२ ॥
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश ।
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ३३॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥

---

ननु सप्तानामपि ज्ञेयत्वादिकं साधर्म्यमुक्तं तत्कस्य वैधर्म्यमत आह—ज्ञेयत्वादिकं विहायेति ॥ २९ ॥

" वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश । दिक्कालयोः पञ्च षडेव चांबरे, महेश्वरेऽष्टौ मनसस्तथैव च ॥ १ ॥ " इति प्राचीनाशिष्टश्लोकमनुसृत्य मूले सर्वेषां पृथक् पृथक् गुणानाह—स्पर्शादयोऽष्टावित्यादिना ॥ ३०–३१–३२–३३–३४ ॥

ते च खे आकाशे ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥
साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति—

**तत्र क्षितिर्गंधहेतुर्नानारूपवती मता ।**
**षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥**

गन्धहेतुरिति गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचित, तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम् । तथाहि । पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिद्ध्यति, अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यं, तत्रापि गन्धसत्त्वात् । अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते । कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते । भस्मनो हि पाषाणध्वंसजन्यत्वात् पाषाणोपादानोपादेयत्वं

---

॥ इति साधर्म्यवैधर्म्यनिरूपणम् ॥

मूले गंधहेतुत्वं पृथिव्या लक्षणमुक्तं तच्च कालादावतिव्याप्तमतो व्याचष्टे **—गन्धेति** । **प्रमाणोपन्यासायेति** पृथिवीत्वजातिसाधनायैव समवायिकारणत्वमुक्तं, न तु लक्षणे प्रवेशनीयं, गन्धवत्त्वमात्रस्यैव लक्षणस्योचितत्वात्, समवायसम्बन्धेन गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च तदर्थः, तेन सुरभ्यसुरभिकपालद्वयारब्धे निर्गन्धघटे नाव्याप्तिः । पृथिवीत्वमेव साधयति **तथाहीत्यादिना** । **अन्यथा** गन्धत्वावच्छिन्नं प्रति पृथिव्या हेतुत्वानङ्गीकारे **आकस्मिकत्वापत्तेः** नियतकारणानियम्यत्वापत्तेरित्यर्थः । तत्रापि पाषाणादावपि गन्धसत्त्वात् पृथिवीत्वेन गन्धानुमानादित्यर्थः । ननु पाषाणादौ गन्धसत्त्वेऽनुपलम्भो न स्यादत आह**—अनुपलब्धिस्त्विति** । ननु पाषाणे पूर्वोक्तयुक्त्या गन्धस्तदा सिध्येद्यदि तत्र पृथिवीत्वसत्त्वे किंचित्प्रमाणं स्यात्तदेव नास्तीत्यतस्तत्साधनाय भूमिकां रचयति**—कथमन्यथेति,** अन्यथा पाषाणादौ पृथिवीत्वानङ्गीकारे तद्भस्मनि पाषाणभस्मनि गन्धः कथमुपलभ्यते नैवोपलभ्येतेत्यर्थः । **भस्मनो हीति** हि यतः भस्मनः पाषाणभस्मनः । **पाषाणोपा-**

सिध्यति। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः। दृष्टं चैतत्खण्डपटे महापटध्वंसजन्ये। इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्यपाषाणस्यापि पृथिवीत्वं तथा च तस्यापि गन्धवत्त्वे बाधकाभावः। नानारूपेति। शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते न तु जलादौ, तत्र शुक्लस्यैव सत्त्वात्। पृथिव्यां तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसंभवात्। नच यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिरिति वाच्यं, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, रूप-

---

दानोपादेयत्वमिति पाषाणस्य यदुपादानं समवायिकारणं तस्योपादेयत्वं, पाषाणस्य यत्समवायिकारणं तद्भस्मनोऽपि तदेव समवायिकारणमित्यर्थः। अत्रानुमानप्रमाणं दर्शयति—यद्द्रव्यमित्यादिना यद्द्रव्यं पाषाणभस्मरूपं द्रव्यं यद्द्रव्यध्वंसजन्यं पाषाणरूपद्रव्यध्वंसजन्यं तत्पाषाणभस्म तदुपादानेति पाषाणसमवायिकारणजन्यमित्यर्थः। व्याप्तिं ग्राहयति—दृष्टं चैतदिति यथा महापटध्वंसजन्यं खण्डपटरूपं द्रव्यं महापटरूपद्रव्यध्वंसजन्यत्वान्महापटसमवायिकारणतन्तुभिरेव जन्यते, तद्वत्पाषाणरूपद्रव्यध्वंसजन्यत्वात्पाषाणभस्मनोऽपि पाषाणसमवायिकारणपरमाणुभिरेव जन्यत्वं स्वीकर्तव्यमित्यर्थः। पाषाणस्य पृथिवीत्वं स्पष्टयति—इत्थं चेति। अत्र केचित् "तत्रापि गन्धसत्त्वा"दित्यस्य यथाश्रुतार्थकत्वं, "कथमन्यथा तद्भस्मनी"त्यत्रान्यथापदस्य च पाषाणादौ गन्धाभावे इत्यर्थकत्वं व्याचक्षते, तत्र च पाषाणादौ गन्धास्वीकारेऽपि पाकवशेन तद्भस्मनि गन्धोत्पत्तिसम्भवेन न तेषां व्याख्यानं बुद्धिमन्मनीषामान्यमित्यन्यत्रविस्तरः। मूले नानारूपवत्त्वं पृथिव्या लक्षणमुक्तं तल्लक्ष्ये प्रतिपादयति—शुक्लनीलेत्यादिना। रूपद्वयेति रूपद्वयवद्वृत्तिसत्तारूपजातिमादाय गुणादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति, द्रव्यत्वव्याप्यजलत्वजातिमादाय जलेऽतिव्याप्तिवारणाय रूपद्वयवद्वृत्तीति। द्रव्यत्वव्याप्यपृथिवीजलान्यतरत्वादिकमादाय जलादावतिव्याप्तिवार-

नाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात् । वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात् । न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः । षड्विध इति । मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव । जले च मधुर एव रसः । अत्रापि पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः । गन्धस्त्विति । द्विविध इति । वस्तुस्थितिमात्रं न तु द्विविधगन्धवत्त्वं लक्षणं द्विविधत्वस्य व्यर्थत्वात् । द्वैविध्यं च सौरभासौरभभेदेन बोध्यम् ॥३५॥

**स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।**

तस्याः पृथिव्याः । अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्तत इत्युक्तं पाकज इति । इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम् । वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्, अधिकस्य वैयर्थ्यात् । यद्यपि पाकजस्पर्शः पटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः ।

**नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ३६**

---

णाय जातीति । अपेक्षाबुद्धिविशेषविषयत्वरूपद्वित्वघटितत्वेन गौरवादाह रूपनाशेति । रसस्य षड्विधत्वं प्रकाशयति—**मधुरेत्यादिना** शर्करादावतिव्याप्तिवारणायाह—**अत्रापीति** । **वस्तुस्थितिमात्रमिति** वस्तुगत्या गन्धो द्विविधस्तिष्ठतीति सूचयितुमुक्तं न तु द्वैविध्यस्यापि लक्षणे प्रवेश इत्यर्थः । गन्धस्य द्वैविध्यं प्रकाशयति **द्वैविध्यं चेति** ॥ ३५ ॥

**इत्थं चेति** पाकजस्पर्शवत्त्वलक्षणोक्ताविल्यर्थः । **पाकजस्पर्शवत्त्वमात्रं त्विति** तुशब्द एवकारार्थः पाकजस्पर्शवत्त्वमात्रमेवेत्यर्थः । **यद्यपीति** वैशेषिकमते पाकजस्पर्शस्य परमाणुष्वेव सत्त्वात्पटादावित्यादिपदेनात्रयविमात्रपरिग्रहः । **पाकजस्पर्शवद्वृत्तीति** सत्तारूपजातिमादायाकाशादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति। स्पर्शवद्वृत्ति जलत्वजातिमादाय जलादावतिव्याप्तिवारणाय पाकजेति । पाकजद्रवत्ववद्वृत्तितेजस्त्वजातिमादाय तेजस्यतिव्याप्तिवारणाय स्पर्शेति ॥ ३६ ॥

**अनित्या तु तदन्या स्यात्सैवावयवयोगिनी ।**
**सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥**

सा पृथिवी द्विविधा नित्या अनित्या चेत्यर्थः। अणुलक्षणा परमाणुरूपा पृथिवी नित्या । तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाऽप्यनित्येत्यर्थः । सैव अनित्या पृथिव्येवावयववतीत्यर्थः । ननु अवयविनि किं मानं परमाणुपुञ्जैरेवोपपत्तेः । न च परमाणूनामतीन्द्रियत्वाद्घटादेः प्रत्यक्षं न स्यादिति वाच्यम्, एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात् । यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम् । नचैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम्, एको महान्धान्यराशिरितिवदुपपत्तेः । मैवं, परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात् । दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात् । न च तदानीमदृश्यपर-

---

बौद्धः शङ्कते—नन्विति । नन्वयं घट इत्यादिप्रतीतिरेवावयविनि प्रमाणमत आह—**परमाणुपुञ्जैरेवेति** विलक्षणसंयोगविशिष्टैः परमाणुभिरेवेत्यर्थस्तेन न मृत्पिण्डेऽपि घट इति व्यवहारः । **उपपत्तेरिति** अयं घट इत्यादिप्रतीत्युपपत्तेः । तत्समूहस्य परमाणुसमूहस्य । तत्र दृष्टान्तमाह—**यथेति** । तत्समूहस्य केशसमूहस्य । ननु परमाणूनामनेकत्वादणुत्वाच्चैको घटः स्थूल इति बुद्धिर्न स्यादित्याह—**न चैको घट** इत्यादिना । उत्तरयति—**एको महानित्यादिना** । **इतिवदुपपत्तेरिति** तत्र यथा धान्यनिष्ठबहुत्वसंख्यारूपसमूहमादायैवैकः, एवं एकधान्यसंयुक्तापरधान्यसंयुक्तान्यधान्यप्रतियोगिकसंयोगमादाय च महान्धान्यराशिरिति बुद्धिर्भवति, तद्वत्परमाणुपुञ्जेष्वपि एको महान्घट इत्यादि प्रतीतिर्भविष्यतीतिभावः । **प्रत्यक्षत्वायोगादिति** स्वभावतोऽयोग्यानां परमाणूनां परस्परसंयोगमात्रेणापि योग्यत्वं न सम्भवतीतिभावः । दूरस्थकेशस्तु न स्वभावतोऽतीन्द्रिय इति त्वदुक्तदृष्टान्तस्य वैषम्यमित्याह— **दूरस्थकेशस्त्विति** । **तस्यैवेति** तस्य दूर-

माणुपुञ्जाद्दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वे विरोध इति वाच्यम्, अदृश्यस्य दृश्यानुपादानत्वात्। अन्यथा चक्षुरूष्मादिसंततेरपि कदाचिद्दृश्यत्वप्रसङ्गात्। नचातितप्ततैलादौ कथमदृश्यदहनसंततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्, तत्र तदन्तः पातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात्। न चादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यं, यतो न दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावाद्वाचक्ष्महे किंतु महत्त्वोद्भूतरूपादिकारणसमुदायवशाद् दृश्यत्वं तदभावे चादृश्यत्वम्। तथा च त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं न तु द्व्यणुकादेस्तदभावात्। नहि त्वन्मतेऽपि संभवतीदं परमाणौ महत्त्वाभावात्। इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम्। तेषां

---

स्थकेशस्य, एवकारश्च संनिधाने इत्यस्याग्रे योजनीयः सन्निधाने एव तस्य प्रत्यक्षत्वादित्यर्थः। तथा च दूरत्वस्य प्रतिबन्धकत्वादेव केशस्य तदानीमप्रत्यक्षत्वं, न तु स्वभावतोऽतीन्द्रियत्वं तस्येतिभावः। न च तदानीमिति घटाद्यवस्थायामित्यर्थः। **उत्पन्नत्वादिति** यत्सत्तत्क्षणिकमिति व्याप्त्या क्षणभङ्गवादिनां मते परमाणूनामप्युत्पत्तिविनाशस्वीकारादितिभावः। **अदृश्येति** तव मत इति शेषः। **दृश्यानुपादानत्वाद्** दृश्याजनकत्वादित्यर्थः। **अन्यथा** अदृश्यस्य दृश्योत्पादकत्वे, **तत्र** तादृशदहनोत्पत्तिस्थले तदन्तःपातिभिः अतितप्ततैलान्तःपातिभिरित्यर्थः। **स्वभावादिति** कारणं विनेत्यर्थः। अयमाशयः— क्षणभङ्गवादिमते अतीन्द्रियत्वं प्रत्यक्षत्वं च स्वाभाविकमतोऽतीन्द्रियस्यैन्द्रियकपदार्थोत्पादकत्वे चक्षुरूष्मादिसन्ततेः कदाचिद्दृश्यत्वमापादितं तद्वारणाय यथा निम्बवृक्षरूपपरमाणुपुञ्जान्नाम्रवृक्षरूपपरमाणुपुञ्जोत्पत्तिरेवमाम्रवृक्षसकाशाच्च न निम्बवृक्षरूपपरमाणुपुञ्जोत्पत्तिरित्यनुभवात्सजातीयपरमाणुपुञ्जसकाशात्सजातीयपरमाणुपुञ्जस्यैवोत्पत्तिरिति नियमः स्वीकृतोऽस्ति तद्वददृश्यपरमाणुपुञ्जाददृश्यस्यैवोत्पत्तिरित्यप्यवश्यं स्वीकर्तव्यमेव। मन्मते तु कारणबलात् त्र्यणुकस्य प्रत्यक्षत्वेऽपि तदभावात् द्व्यणुकस्यातीन्द्रियत्वसम्भवाददृश्यस्य दृश्यकारणत्वेऽपि क्षतिविरहादिति दिक्।

चावयवावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः । अतः क्वचिद्विश्रामो वाच्यः । यत्र तु विश्रामस्तस्यानित्यत्वेऽसमवेतकार्योत्पत्तिप्रसङ्ग इति तस्य नित्यत्वम् । महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः । न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यं, त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः । न चेदमप्रयोजकम्, अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यत्वस्य प्रयोजकत्वात् । न चैवं क्रमेण तदवयवावयवधारापि सिद्ध्येदिति वाच्यम्, अनवस्थाभयेन तदसिद्धेरिति ॥ सा चेति । सा कार्यरूपा पृथिवी त्रिधेत्यर्थः । शरीरेन्द्रियविषयभेदादित्यर्थः ॥ ३६ ॥ ३७ ॥

तत्र देहमुदाहरति—

**योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।**
**विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥३८॥**

---

इत्थं चेति पूर्वोक्तयुक्त्या चेत्यर्थः, तेषामवयविनां, **मेरुसर्षपयोरिति** मेरुसर्षपयोः साम्यप्रसङ्गोऽपीति योजना । अपिशब्देन द्व्यणुकस्य सावयवारब्धत्वे महत्त्वापत्तिः समुच्चीयते । साम्यं परिमाणतारतम्याभावः परिमाणकारणीभूताया अवयवसंख्याया उभयत्रानन्तत्वेन साम्यादितिभावः । ननु विश्रामाश्रयस्य नित्यत्वे किं मानमत आह—**यत्र त्विति । असमवेतेति** असमवेतभावकार्य्योत्पत्तिप्रसङ्गादित्यर्थः । ननु तस्य नित्यत्वसिद्धावपि परमाणुत्वे किं मानमत आह—**महत्परिमाणेति** । तदवयवसिद्धौ त्र्यणुकावयवसिद्धौ । **अनेक द्रव्यत्वस्येति** समवेतसमवेतवृत्तिद्रव्यत्वस्येत्यर्थः । **तदसिद्धेः** अवयवधाराया असिद्धेः । अत्र द्वाभ्यां परमाणुभ्यां द्व्यणुकं त्रिभिर्द्व्यणुकैश्च त्र्यणुकमिति संप्रदायो बोध्यः । देहमिन्द्रियं विषयस्तथेत्यस्य हेतुपरत्वं सूचयितुमर्थमाह—**साकार्यरूपेति** ॥ ३७ ॥

योनिजमयोनिजं चेत्यर्थः। योनिजमपि द्विविधं जरायुजमण्डजं च। जरायुजं मानुषादीनाम्। अण्डजं सर्पादीनाम्। अयोनिजं स्वेदजोद्भिज्जादिकम्। स्वेदजाः कृमिदंशाद्याः। उद्भिज्जास्तरुगुल्माद्याः। नारकिणां शरीरमप्ययोनिजम्। न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यं, गन्धादिमत्त्वस्यैव प्रमाणत्वात्,। न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यं, तथा सति जलत्वपृथिवीत्वादिना संकरप्रसङ्गात्। न च तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यं, क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानाद्गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः। तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम्। शरीरत्वं तु न जातिः पृथिवीत्वादिना सांकर्यात्, किंतु चेष्टाश्रयत्वम्। वृक्षादीनामपि चेष्टासत्त्वान्ना-

---

**योनिजं** शुक्रशोणितयोः परस्परमेलनजन्यं, न तु योनिद्वारा निर्गतं, स्वेदजादावतिव्याप्तेः। तद्भिन्नमयोनिजं। **जरायुजमिति** गर्भवेष्टनचर्मपुटकं जरायुः तज्जन्यं। मानुषादीनामित्यादिना पश्वादीनां परिग्रहणं। सर्पादीनामित्यादिना पक्ष्यादिपरिग्रहः। स्वेदजमुदाहरति—**कृमिदंशाद्या** इति एतेषां शरीराणामधर्म्मविशेषविशिष्टेभ्यः परमाणुभ्य एवोत्पत्तेः स्वीकारात्। उद्भिज्जादिकमित्यादिना देवशरीराणां परिग्रहस्तेषामुत्पत्तिस्तु धर्मविशिष्टेभ्यः परमाणुभ्यः एव सम्भवतीति ब्रह्मणो मानसा मन्वादयः पुत्रा इत्यादिशास्त्रे स्फुटमेव। योनिं विना न शरीरमेवंविधागमे तु योनिपदं कारणमात्रपरमिति बोध्यम्। **गन्धादिमत्त्वस्येति** आदिपदेन च शुक्लेतररूपपरिग्रहः। ननु मानुषादिशरीराणां पार्थिवत्वे "शरीरं पाञ्चभौतिक"मित्यादिव्यवहारो न स्यादत आह—**तेनेति** मानुषादिशरीराणां पार्थिवत्वसाधनेनेत्यर्थः, तथा च शरीरे पाञ्चभौतिकमिति व्यवहारो न पञ्चभूतोपादाननिमित्तकः, किं तु पञ्चभूतजन्यत्वनिमित्तक एवेतिभावः। **सांकर्यादिति** शरीरत्वं विहाय पृथिवीत्वं वर्तते घटे, पृथिवीत्वं विहाय शरीरत्वं च देवशरीरे, इत्येवं पृथिवी

व्याप्तिः । न च वृक्षादेः शरीरत्वे किं मानमिति वाच्यम्, आध्यात्मिकवायुसंबन्धस्य प्रमाणत्वात् । तत्रैव किं मानमिति चेद्भग्नक्षतसंरोहणादिना तदनुमानात् । यदि हस्तादौ शरीरव्यवहारो न भवति तदान्त्यावयवित्वेन विशेषणीयम् । न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यं, तादृशे प्रमाणाभावात् । अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत् । मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः । न च नृसिंहशरीरे कथं लक्षणसमन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यं, कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात् । इन्द्रियमिति घ्राणे-

---

त्वादिना सांकर्यस्य स्फुटत्वाच्छरीरत्वं न जातिरित्यर्थः । **चेष्टेति** चेष्टात्वं चात्र जातिविशेषश्चेष्टत इत्यनुभवसिद्धः । आध्यात्मिकवायुः प्राणाख्यो वायुः । **तत्रैव** प्राणाख्यवायावेव । तदुन्नयनात्प्राणाख्यवायोरनुमानादित्यर्थः । **अन्त्यावयवित्वेनेति** अन्त्यावयवित्वं च द्रव्यानारम्भकत्वे सति अवयवित्वं, इह तु द्रव्यानारम्भकत्वे सति चेष्टाश्रयत्वमित्येवलक्षणं, अधिकस्य वैयर्थ्यात् । **तादृश** इति यत्र चेष्टा न जाता तादृशशरीरे मानाभावादित्यर्थः । यत्र मरणानन्तरं खण्डशरीरोत्पत्तिस्तत्र चेष्टाया असत्त्वेनाव्याप्तेराह—**अथवेति** । चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यपृथिवीत्वजातिमादाय घटादावतिव्याप्तिवारणायाह—**अन्त्यावयविमात्रेति। तत्** शरीरत्वं । चेष्टा चात्र हिताहितप्राप्तिपरिहारानुकूला क्रियैव ग्राह्या, तेन नोदनं विनापि यत्राचेतने घटादौ मन्त्रमहिम्ना क्रियोत्पत्तिस्तत्र मन्त्रमहिम्ना घटश्चेष्टत इतिव्यवहारेण चेष्टात्वजातिविशिष्टायाश्चेष्टायाः स्वीकर्तव्यत्वेऽपि नातिव्याप्तिः । अत्रेष्टत्वं स्वावच्छिन्नेच्छाविषयत्वमनिष्टत्वं च स्वावच्छिन्नद्वेषविषयत्वं, तेन घटादिक्रियाया अपि कस्यचिदिष्टानिष्टप्राप्तिपरिहारानुकूलत्वसम्भवेऽपि न घटत्वादिकमादायातिव्याप्तिः । **जलीयतैजसशरीरेति** जलत्वेन तेजस्त्वेन च सह सांकर्यद्देवत्वमपि न जातिरित्यर्थः ।

न्द्रियं पार्थिवमित्यर्थः । पार्थिवत्वं कथमिति चेदित्थम् । घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् । कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत् । न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं, परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् । न च नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यं, तस्य सक्तुरसाभिव्यञ्जकत्वात् । यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टान्तत्वसंभवात् । न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं, द्रव्यत्वे सतीति विशेषणात् । विषय इति । उपभोगसाधनं विषयः । सर्वमेव हि कार्यजातमदृष्टाधीनम्, यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयत्येव । नहि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । तेन द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव विषयो भवति । शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३८ ॥

---

देवत्वस्यापीत्यपिना नृसिंहत्वपरिग्रहः । **रूपादिषु मध्ये** इति रूपरसगन्धस्पर्शशब्देषु मध्ये गन्धस्यैव बोधकत्वादित्यर्थः । घ्राणेन्द्रियस्य गन्धत्वादेरपि बोधकत्वाद्वैतो मध्यांतं, मनसि व्यभिचारवारणाय चैवकारः । **तदर्थत्वादिति** गन्धस्यैवाभिव्यञ्जकत्वादित्यस्यार्थत्वादित्यर्थः । **तस्य** नवशरावगन्धव्यञ्जकजलस्य । परकीयेतिविशेषणाप्रवेशेन लाघवादाह **यद्वेति** । परकीयानुपादाने हेतुमाह—**वायूपनीतेति** । **इतिविशेषणादिति** तथा च रूपाद्यव्यञ्जकत्वे सति गन्धमात्रव्यञ्जकद्रव्यत्वादित्यस्यार्थो बोध्य इति भावः । वस्तुतस्तु रूपाव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वादित्यादिहेतुत्रय एव विषय इति ग्रन्थकर्तुस्तात्पर्यं बोध्यम् । **विषयमाहेति** ननु किं नाम विषयत्वं सामान्यादावपि वृत्तित्वेन जातित्वाभावादत आह—**उपभोगेति** । **यददृष्टाधीनं** यत्पुरुषीयादृष्टाधीनं, तत्तत्कार्य्यं, तदुपभोगं तत्पुरुषस्योपभोगमित्यर्थः ॥ ३८ ॥

॥ इति पृथिवीग्रन्थः ॥

जलं निरूपयति—

**वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।**
**स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥**

स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यति। यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, नित्यस्य च स्वरूपयोग्यत्वे फलावश्यंभावनियमादिति चेन्न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः । शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं वर्णः शुक्ल इति। न तु शुक्लरूपवत्त्वं लक्षणम्। अथवा नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः । तेन स्फटिकादौ नातिव्याप्तिः । रसस्पर्शाविति । जलस्य मधुर एव रसः शीत एव स्पर्शः । तिक्तरसवदवृत्तिमधुर-

---

जलत्वजातौ प्रमाणमाह-**स्नेहेति** कारणतावच्छेदकतया जलत्वसिद्धौ बाधकाभावात्तस्य जातित्वसिद्धिरितिभावः । **न कार्यतावच्छेदकमिति** नित्यवृत्तिधर्मस्य कार्य्यतावच्छेदकत्वाभावादितिभावः । **स्वरूपयोग्यत्वे** कारणतावच्छेदकधर्म्मवत्त्वे । **फलावश्यं भाव इति** अरण्यस्थदण्डादौ घटस्वरूपयोग्यत्वस्वीकारेऽपि न काप्यनुपपत्तिस्तस्यानित्यत्वेन फलोपधायकत्वाभावात, नित्यस्य स्वरूपयोग्यत्वे तु फलस्यावश्यं भावः स्यादितिभावः । **तदवच्छिन्नेति** जन्यजलत्वावच्छिन्नेत्यर्थः । ननु शुक्लरूपवत्त्वं पृथिव्यादावतिव्याप्तमत आह—**दर्शयितुमिति** न तु लक्षणमिति पृथिव्यादावतिव्याप्तेरितिभावः । शुक्लरूपवत्त्वस्य लक्षणत्वेऽप्याह—**नैमित्तिकद्रवत्ववदवृत्तीति** द्रव्यत्वसाक्षाद्व्याप्यत्वं चात्र द्रव्यत्वव्याप्याव्याप्यत्वं बोध्यं, एतल्लक्षणस्योदक्षरत्वादाह—**अभास्वरेति** । साक्षात्पदस्य कृत्यमाह—**तेनेति** । ननु जले नीलरूपाभावे कालिंदीजले कथं

वद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः तेन शर्करादौ नातिव्याप्तिः। शीतेतरस्पर्शवद्वृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। ननु शुक्लरूपवत्त्वमेवेति कुतः कालिन्दीजलादौ नीलिमोपलब्धेरिति चेन्न, नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्। कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धिः। अथ जले माधुर्ये किं मानम्, नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते। नच नालिकेरजलादौ माधुर्यमुपलभ्यत एवेति वाच्यं, तस्याश्रयोपाधिकत्वात्। अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादितिचेन्न, हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात्। नच हरीतक्यामेव जलतेजःसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यं, कल्पनागौरवात्। पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम् जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीतिः। एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वं त-

---

नीलिमोपलब्धिरत आह—**कालिंदीजल** इति। **आश्रयौपाधिकीति** स्वाश्रयसंयोगसम्बन्धेन कालिन्दीजले नीलप्रतीतिरिति भावः। **अत एवेति** पूर्वोक्तसम्बन्धस्य जलं नीलमिति प्रतीतिनियामकत्वादेवेत्यर्थः। तत्र जले। तस्य माधुर्य्यस्य। अन्यथा नालिकेरजलस्याश्रयौपाधिकत्वाभावे। **हरीतक्यादिभक्षणस्येति** तथा च हरीतकीभक्षणोत्तरं प्रत्यक्षेणैव जले माधुर्य्यमुपलभ्यत इतिभावः। **कल्पनागौरवादिति** अवयवगतरसाजन्य (पृथिवी) रसं प्रति तेजःसंयोगस्य हेतुत्वं सर्वसंमतं एतदनुरोधेन जलसंयोगस्यापि पृथिवीरसोत्पादकत्वस्वीकारेऽतिरिक्तकार्य्यकारणभावस्य हरीतक्यां मधुरस्य च कल्पने गौरवादिति तात्पर्य्यं। नन्वस्तु जले माधुर्य्यं तथापि जंबीरजलादावाम्लारसस्य सर्वानुभवसिद्धत्वेनाम्लरसोऽपि जले स्यादत आह—**पृथिवीत्वस्येति**। ननु जम्बीररसानुरोधेन जलत्वेन विजातीयजलत्वेनापि वा आम्लं प्रति हेतुत्वं स्वीकर्तव्यमत आह—**जम्बीरेति**। तथाप्रतीतिराम्लरसप्रतीतिरित्यर्थः। शुष्केऽपि

दवच्छिन्नजनकतावच्छेदकं तु जलत्वं बोध्यम्। घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव। तेजःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव। तत्र पाकासंभवात्॥ स्नेहस्तत्रेति। घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः, जलस्य स्नेहसमवायिकारणत्वात्। तेन जल एव स्नेह इति मन्तव्यम्॥ द्रवत्वमिति। सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः। तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः। तैलादावपि जलस्य द्रवत्वं स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति॥ ३९॥

**नित्यतादि प्रथमवत्किंतु देहमयोनिजम्।**
**इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः॥ ४०॥**

प्रथमवदिति। पृथिव्या इवेत्यर्थः। तथाहि। जलं द्विविधं नित्यमनित्यं च। परमाणुरूपं नित्यं द्व्यणुकादिकं सर्वमनित्यमवयवसमवेतं च। अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात्॥ पृथिवीतो यो विशेषस्तमाह। किंत्विति। देहमयोनिजम्, अयोनिजमेवेत्यर्थः। जलीयं शरीरं वरुणलोके प्रसिद्धम्। इन्द्रियमिति जलीयमित्यर्थः। तथाहि। रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रस-

---

जम्बीरे आम्लरसस्यैवानुभवात्तद्गतजले परंपरया तस्यैव प्रतीतिः, हरीतक्यां तु मधुररसाभावान्न हरीतकीगतमाधुर्यस्य जले प्रतीतिरितिभावः। जलत्वाभावेऽपि घृष्टचन्दनादौ शैत्योपलब्धेः शीतस्पर्शवत्त्वमतिव्याप्तमत आह—घृष्टेति। तत्र जले पाकासम्भवत्त्वं चाग्रे स्फुटीभविष्यति। **तदवच्छेदकमपीति** सांसिद्धिकद्रवत्वत्वावच्छिन्नजनकतावच्छेदकमपि, तदेव जन्यजलत्वमेवेत्यर्थः। वक्ष्यति स्नेहनिरूपणावसरे तत्प्रकर्षाद्दहनस्यानुकूलतेत्यनेन वक्ष्यतीत्यर्थः॥३९॥

**जलीयं शरीरमिति** तच्च पार्थिवभागोपष्टब्धं बोध्यं, तेन केवले जले हस्तपादादिव्यवस्थाया असम्भवेऽपि न क्षतिः। **वरुणलोक इति** तथा च तत्र श्रुतिरेव प्रमाणमितिभावः। कासारः सरः, करकादिरित्यादिना कूपा-

व्यञ्जकत्वात्, सक्तुरसाभिव्यञ्जकोदकवत्। रसनेन्द्रियसंनिकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। विषयं दर्शयति सिन्धु हिमादिरिति। सिन्धुः समुद्रः। हिमं तुषारः। आदिपदात्सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः। नच हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम्, उष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात्। यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः। अदृष्टविशेषेणच द्रवत्वप्रतिरोधात् करकादीनां काठिन्यप्रत्ययस्य भ्रान्तत्वात् ॥ ४० ॥

तेजो निरूपयति—

**उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।**
**नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥४१॥**

उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः। इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः। तस्य परमाणुवृत्तित्वं तु जलत्वस्येवानुसंधेयम्। नचोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यं, तत्राप्युष्णत्वस्य सत्त्वात्। किंतु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः। एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभ-

---

दिपरिग्रहः। कठिनत्वात् कठिनस्पर्शवत्त्वादित्यर्थः हिमकरकयोर्जलत्वे कथं काठिन्यप्रत्ययः? अत आह—**भ्रान्तत्वादिति** ॥ ४० ॥

॥ इति जलग्रन्थः ॥

**इत्थं चेति** उष्णत्वजातिसिद्धौ चेत्यर्थः। **जलत्वस्येवेति** तथा च यथा जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया परमाणुसाधारणा जलत्वं जातिः सिद्ध्यति, तथा जन्यतेजस्त्वावच्छिन्नजनकतावच्छेदकतया तेजःपरमाणुसाधारणायास्तेजस्त्वजातेरपि सिद्धिरितिभावः। चन्द्रकिरणादेरित्यादिना रत्नकिरणादेः परिग्रहः। **तत्रापि** चन्द्रकिरणादावपि। ननु तह्यौष्ण्यप्रतीतिः स्यादत आह—**किंत्विति**। **तदन्त इति** चन्द्रकिरणान्तःपातीत्यर्थः। ननु चक्षुरादौ

वाचक्षुरादौ चानुद्भूतत्वादग्रहः ॥ रूपमित्यादि । वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः ॥ ननु तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेन्न, अन्यदीयरूपेणापि धर्मिणो ग्रहसंभवात्, शङ्खस्येव पित्तपीतिम्ना । वह्नेस्तु शुक्लरूपं नाभिभूतं किंतु तदीयं शुक्लत्वमभिभूतमित्यन्ये ॥ नैमित्तिकमिति । सुवर्णादिरूपे तेजसि तत्सत्त्वात् । न च नैमित्तिकद्रवत्वं न लक्षणं दहनादावव्याप्तं घृतादावतिव्याप्तं चेति वाच्यं पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ पूर्ववदिति । जलस्येवेत्यर्थः । तथाहि तत् द्विविधं नित्यमनित्यं च । नित्यं परमाणुरूपं तदन्यदनित्यम्, अवयवि च । तच्च त्रिधा शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेव । तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

अत्र यो विशेषस्तमाह—

**इन्द्रियं नयनं वह्निः स्वर्णादिर्विषयो मतः ।**

ननु चक्षुषस्तैजसत्वे किं मानमिति चेत्, चक्षुस्तैजसं परकी-

---

कथं न उष्णस्पर्शग्रहः ? अत आह—**चक्षुरादौ चेति** । **अथेति (नन्विति)** तद्रूपाग्रहे वैश्वानरादिगतभास्वररूपाग्रहे । धर्मिणोऽपि वैश्वानरादेरपि । अयोग्यव्यक्तिवृत्तित्वेन वैश्वानरादिगतसंख्यादेरपि ग्रहणं न स्यादित्यपिना सूचितं बोध्यम् । **अन्यदीयेति** पार्थिवरूपेणेत्यर्थः । यथा पित्तपीतिम्ना शंखादेः प्रतीतिस्तद्वदत्रापीतिभावः । ननु शंखादिगतरूपस्य वस्तुगत्या नानुद्भूतत्वं किंतु पित्तदोषेण शुक्लरूप एव पीतत्वं भासत इत्यभिप्रायवानाह—वह्नेस्त्विति । **सुवर्णादिरूपेति** तत्सत्त्वाद्द्रवत्वसत्त्वादित्यर्थः, तेन नासम्भव इति भावः । **पृथिव्यवृत्तीति** अत्रापि साक्षात्पदं संपातायातं **तच्च** तैजसं शरीरम् ॥ ४१ ॥

**परकीयेति** अत्रापि चक्षुःसन्निकर्षेऽतिव्याप्तिवारणाय द्रव्यत्वे सतीति पूरणीयम् । अत्र केचिद्बौद्धादयश्चक्षुषोऽप्राप्यकारित्वं, व्याचक्षते प्रमाणयन्ति च ते—यदि चक्षुः प्राप्यकारि स्यात्तदा रसनादिवदधिष्ठानसम्बद्धमेव गृह्णीयात्, न चैवं, प्रत्यक्षबाधात् । किंच यदि चक्षुः प्राप्य गृह्णीयात्तदा स्वतोऽधिकप-

रिमाणवद्वस्तु न गृह्णीयात्, उक्तं च—" न खलु नखलुशस्त्रं स्वप्रमाणात्प्रविष्टे पटकटशकटादौ भेदकारि प्रसिद्धमित्यादि, " प्राप्यकारित्वे च शाखाचन्द्रमसोस्तुल्यकालग्रहणमपि न स्यादिति । तदेतदखिलमसमीक्षितभाषितत्वेनासत्, तथाहि—अधिष्ठानासम्बद्धवस्तुग्राहिण्याः प्रदीपप्रभाया इव चक्षुषोऽपि प्राप्यकारित्वसम्भवात्, स्वाधिकपरिमाणग्राहित्वं चास्य गोलकनिर्गतस्य चक्षुषः प्रदीपप्रभावदेवोपपत्तेः । न च प्रदीपस्य तैजसत्वेन तत्प्रभायाः सर्वत्र प्रसृतत्वात्स्वतोऽधिकपरिमाणवद्वस्तुग्राहित्वसम्भवेऽपि न चक्षुषः प्राप्यकारित्वं सम्भवति चक्षुषस्तैजसत्वे मानाभावादिति वाच्यं, स्पर्शादिषु मध्ये रूपस्यैवाभिव्यञ्जकद्रव्यत्वादिति हेतुना चक्षुषि तैजसत्वसाधनात् । न चास्य हेतोरञ्जनादौ व्यभिचार इति वाच्यं, अञ्जनादेरन्यत्वक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसम्भव इत्याद्यन्यथासिद्धत्वेन रूपग्राहित्वस्यैवासम्भवात्, किं तु चक्षुर्गतदोषव्यावर्तकत्वेन बाधस्थले भ्रमत्वशङ्काविघटनद्वारा प्रामाण्यज्ञानवदंजनादिकमपि चाक्षुषादौ क्वचिदुपयुज्यते, न तु कारणत्वं तस्य । न च भास्वरशुक्लरूपाभावाच्चक्षुषो न तैजसत्वमिति वाच्यं, चक्षुषि भास्वरशुक्लरूपस्य सत्त्वात् । अनुपलब्धिस्त्वनुद्भूततयापि संगच्छते । न चैवं सुवर्णवच्चक्षुषोऽपि रूपादिप्रकाशकत्वं न स्यादिति वाच्यं, चाक्षुषलौकिकप्रत्यक्षं प्रत्युद्भूतरूपावच्छिन्नमहत्वावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगस्य कारणत्वात्, आलोकश्चान्धकारप्रतियोगि तेजः तथा चान्धकारे सुवर्णसत्त्वदशायां भूतलादिचाक्षुषापत्तिवारणायालोकसंयोगावच्छिन्नेत्यत्र तेजसि एव उद्भूतानभिभूतत्वं विशेषणं, न तु चक्षुष्यपीति यत्किंचिदेतत् । ननु काचकूपोदरान्तरगतस्य व्यवधिमतोऽपि जलादेः प्रकाशकत्वेन चक्षुषो मनस इव प्राप्यकारित्वं न सम्भवतीति चेन्न, काचकूपादेः सूक्ष्मतरच्छिद्रवत्त्वेन नेत्रकिरणानां तदन्तःप्रवेशसम्भवात् । न चैवं काचकूपादितो जलादेः बहिः प्रपातः स्यादिति वाच्यं, जलापेक्षया तच्छिद्राणामत्यन्तं सूक्ष्मतरत्वकल्पनात्, कथमन्यथा काष्ठादिना गाढतरं पिहितमुखस्यापि काचकूपादेरन्तर्गतस्य जलादेरातपादिना सर्वानुभवसिद्धमुष्णत्वं

यस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् । प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमं

---

सङ्गच्छेत, तत्रापि सूर्यरश्म्यादीनां जलादेः सम्बन्धोऽवश्यं स्वीकर्तव्यः, स च सम्बन्धः काचकूपादौ छिद्रानङ्गीकारे न सम्भवतीत्यकामेनापि काचकूपादेः सच्छिद्रत्वं स्वीकर्तव्यं । सच्छिद्रत्वे च तस्य जलादीनां ततो वहिः प्रपातापत्त्या तच्छिद्राणां जलापेक्षयातिसूक्ष्मत्वं रश्म्यपेक्षया च स्थूलत्वं भवतापि स्वीकृतमेवेति "चक्षुरप्राप्य धीकृद्व्यवधिमतोऽपि प्रकाशकं यस्मादंतःकरणं यद्वद्व्यतिरेके स्यात्पुना रसना ॥ १ ॥" इत्यादिकं यत्कैश्चिदुक्तं तदापातरमणीयमेवेति दिक् । काचकूपादेः सच्छिद्रत्वं रश्मिभिः छिद्रकरणाद्भवति पूर्वमेव वा तस्य सच्छिद्रत्वमिति विचारस्य न प्रकृतोपयोगित्वमिति तदुपेक्ष्यते ॥ नन्वेवमपि घटाद्यन्तर्गतस्य व्यवधिमतोऽपि जलादेश्चाक्षुषत्वापत्तिर्दुर्वारेति चेन्न, तत्र कुंभादिभिर्नेत्रकिरणानां प्रतिघातत्वस्वीकारात, कथमन्यथा घटाद्यंतर्गतस्य व्यवधिमतो जलादेर्दीपकाद्यालोकेनापि प्रकाशो नानुभूयते इत्यतो दृष्टे किंचिन्नानुपपन्नं नामेति न्यायेनेदृश एव तेजसः स्वभावो यत्खलु कुत्रचित्तत्प्रतिघातः कुत्रचिच्चाप्रतिघात इति।

यच्च चक्षुषः प्राप्यकारित्वे शाखाचन्द्रमसोस्तुल्यकालग्रहणं न स्यादित्यापादितं तत्रेष्टापत्तिरेव । तुल्यकालाभिमानश्चाशूत्पत्त्यैव, अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयो यदुदयगिरिचूडावलम्बिन्येव भगवति सवितरि भवनोदरेष्वालोक इत्यभिमानो लोकानामिति सिद्धं मनोभिन्नेन्द्रियत्वस्वरूपबहिरिन्द्रियत्वेन हेतुना चक्षुषः प्राप्यकारित्वं । किञ्च इदं रूपमिति ज्ञानं इन्द्रियसंयुक्तसमवायजन्यं विभ्ववृत्तिगुणविषयकलौकिकप्रत्यक्षत्वात् तादृशस्पर्शप्रत्यक्षवदित्यनुमानेनापि चक्षुषः प्राप्यकारित्वमेवेत्यलमतिप्रसङ्गेन । एतेन नहि काचकूपादौ सूर्यादिकिरणानामपि प्रवेशोऽस्माभिः स्वीक्रियते किंतु सूर्यालोकेन परंपरया तत्रस्थान्धकारकारणीभूताः पुद्गलापरनामानो द्रव्यविशेषा एव वासिताः संतः काचकूपाद्यंतर्गतस्य जलादेः प्रकाशका भवंतीत्याद्यपि प्रत्युक्तं, अन्धकारस्य पुद्गलकार्यत्वे मानाभावात् क्लिष्टकल्पनाप-

परकीयेति । घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति । अथवा प्रभाया दृष्टान्तत्वसंभवादाद्यं परकीयेति न देयम् । चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् ॥ विषयं दर्शयति । वह्निरिति । ननु सुवर्णस्य तैजसत्वे किं मानमिति चेन्न, सुवर्णं तैजसम्, असति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात् यन्नैवं तन्नैवम्, यथा पृथिवीति । न चाप्रयोजकं, पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य चात्यन्ताग्निसंयोगनाश्यत्वात् । ननु पीतिमगुरुत्वाश्रयस्य पार्थिवभागस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेन्न, जलमध्यस्थमपीक्षोदवत्तस्याद्रुतत्वात् । अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्रव्यं कल्प्यते । तथाहि । अत्यन्ताग्निसंयोगे पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्य-

---

त्यादिरूपानेकविधदोषदुष्टत्वाच्चैतत्कल्पनायाः ॥ लाघवादाह—अथवेति । ननु सुवर्णस्य तैजसत्वे किं मानमिति सुवर्णं पार्थिवं आकरोद्भवत्वादित्यादिहेतोः पार्थिवत्वसाधकस्यैव सत्त्वात् । समाधत्ते—नेति । अनुच्छिद्यमानेति अनुच्छिद्यमानद्रवत्वाधिकरणत्वादित्यर्थः, तेन नाकाशादौ व्यभिचारः । न चाप्रयोजकमिति अस्तु अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वं, मास्तु तैजसत्वमित्यत्र विपक्षे बाधकतर्काभाव इत्यर्थः । अग्निसंयोगनाश्यत्वादिति उपलक्षणं चैतत् "अग्नेरपत्यं प्रथमं हिरण्यम्" इत्याद्यागमान्यथानुपपत्तेरप्यनुकूलतर्कत्वादिति । तदानीमत्यन्तानलसंयोगदशायां।क्षोदश्चूर्णं । तस्य पीतिमगुरुत्वाश्रयस्य । ननु मषीक्षोदेषु जलं विना द्रवत्वादर्शनाज्जलसंयोगेऽपि तत्र द्रवत्वं नास्तीति शक्यते वक्तुं, प्रकृते तु सुवर्णसंमिलितपीतिमगुरुत्वाश्रयस्य पार्थिवभागस्य तेजोभागं विना क्वाप्यदर्शनान्न दृष्टान्तसाम्यतेत्यभिप्रायवतां मतमुपन्यस्यति—अपरे त्वित्यादिना । तत्प्रतिबन्धकं रूपपरावृत्तिप्रतिबन्धकं । अनुमानस्वरूपं दर्शयति—तथाहीत्यादिना । जलपरमाणौ

न्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात्, जलमध्यस्थपीतपटवत्। तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात् ॥

वायुं निरूपयति—

**अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः ॥४२॥**
**तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः।**
**पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥**

अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्वादुक्तमपाकज इति। अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीत इति। तेन वायवीयो विजातीयः स्पर्शो दर्शितः। तज्जनकतावच्छेदकं वायुत्वमिति भावः। एष वायुः स्पर्शादिलिङ्गकः। वायुर्हि स्पर्शशब्दधृतिकम्पैर-

---

व्यभिचारवारणाय हेतौ पृथिवीत्वमपि देयम्। तस्य द्रवद्रव्यस्य **पृथिवीजलभिन्नस्येति** पृथिव्याः पक्षीकृतपीतिमाश्रयाया विजातीयत्वाभावाज्जलस्य च तत्रासम्भवादितिभावः। **तेजस्त्वनियमादिति** वाय्वादौ द्रवत्वाभावादितिभावः। तथा च पार्थिवत्वसाधकस्य पूर्वोक्तानुमानस्याप्रयोजकत्वमेवेति सिध्धं। न चैवमन्धकारे पीतिमगुरुत्वाश्रयद्रव्यग्रहापत्तिः सुवर्णरूपतेजःसंयोगस्य सत्त्वादिति वाच्यं, विलक्षणतेजःसंयोगस्यैव द्रव्यप्रत्यक्षे हेतुतयोक्तत्वात् सुवर्णरूपस्य तु पार्थिवरूपेणाभिभूतत्वात्। अन्धकारे सुवर्णस्य चाक्षुषत्वापत्तिवारणाय सुवर्णादिभिन्नं यत्तेजस्तद्भिन्नद्रव्यप्रत्यक्षं प्रत्यालोकसंयोगस्य द्रव्यप्रत्यक्षं प्रति कारणत्वमिति बोध्यम् ॥

॥ इति तेजोनिरूपणं ॥

वायौ प्रमाणदर्शनार्थं मूले अपाकज इत्याद्युक्तं तत्रापाकजादिपदानां क्रमेण व्यावृत्तिमाह—**अनुष्णाशीतस्पर्शस्येति**। **एतेन** स्पर्शस्यानुष्णाशीतत्वकथनेन। **तज्जनकतावच्छेदकमिति** तथा च विजातीयस्पर्शजनकतावच्छेदकतया लाघवाज्जातिरूपं वायुत्वं सिद्ध्यतीतिभावः ॥ ४२ ॥

मूले **स्पर्शादिलिङ्गक** इति स्पर्शादीनि लिङ्गान्यनुमापकानि यस्य स

नुमीयते विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पेन च वायोरनुमानात् । यथा च वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते ॥ पूर्ववदिति । वायुर्द्विविधो नित्योऽनित्यश्च । परमाणुरूपो नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च । सोऽपि त्रिविधः, शरीरेन्द्रियविषयभेदात् । तत्र शरीरमयोनिजं पिशाचादीनाम् । परंतु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वं जलादीनां प्राधान्याज्जलीयत्वादिकमिति ॥ अत्र यो विशेषस्तमाह । देहव्या-

---

तथोक्तः । मुक्तावल्यां **अनुमानादिति** विजातीयस्पर्शेनानुमानात्, एवं विलक्षणशब्देन वायोरनुमानादित्यग्रेऽपि तृतीयान्तं पदद्वयमनुमानादित्यनेनान्वेति । अनुमानप्रकारश्चेत्थं—योऽयं रूपवद्द्रव्यासमवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात्पृथिवीसमवेतस्पर्शवत् । एवमसति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसंतानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वाद्दण्डाभिहतभेरीशब्दसंतानवत् । अत्र साध्ये स्पर्शवदिति पदानुपादानेऽपि न क्षतिरिति ध्येयम् । एवं नभसि तृणादीनां धृतिः वेगवद्द्रव्यसंयोगजन्याऽस्मदाद्यनधिष्ठितद्रव्यधृतित्वाज्जले नौकाधृतिवत् । एवं रूपवद्द्रव्याभिघातमन्तरेण तृणादौ कर्म्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्म्मत्वान्नदीपूराभिहतकाशादिकर्मवदिति । ननु शीतो वायुरित्याद्यनुभवाद्वायोः प्रत्यक्षसम्भवाद् "ज्ञेयः स्पर्शादिलिङ्गकः" इति मूलमप्रयोजकमत आह—**यथा चेति** । अग्रे "रूपमत्रापि कारणमिति" कारिकाव्याख्यानावसर इत्यर्थः । मूलोक्तपूर्ववदित्यादेरर्थं स्फोटयति—**वायुर्द्विविध** इत्यादिना । तत्र तेषु मध्य अयोनिजमयोनिजमेवेत्यर्थः । **पिशाचादीनामिति** मरुतां लोके प्रसिद्धमिति शेषः । वायौ करचरणादेरभावेनाहरणादेरसम्भवान्न भोगायतनत्वं सम्भवतीत्याशंक्याह—**परं त्विति** । जलीयतैजसशरीरयोरप्याक्षेपस्य तुल्यत्वात्प्रकरणलाघवमभिप्रेत्य साधारण्येन समाधत्ते—**जलीयतैजसवायवीयेत्यादिना** । जलीयत्वव्यवहारप्रयोजकधर्मं दर्शयति—**जलादीनामिति** । अत्र त्वगिन्द्रिये ।

पीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् । अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् ॥ ४२ ॥ ४३ ॥

विषयं दर्शयति—

**प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ।**

यद्यप्यनित्यो वायुश्चतुर्विधः तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे । तथापि संक्षेपादत्र त्रैविध्यमुक्तम् । प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासंज्ञां लभत इति ॥

आकाशं निरूपयति—

**आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥**

आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिकं न जातिः ।

---

न च नखलोमादीनामपि शरीरत्वात्त्वगिन्द्रियस्य देहव्यापकत्वमसम्भवितमिति वाच्यं, तेषां संयोगिद्रव्यत्वेन शरीरत्वाभावात्, अत एव धर्मशास्त्रे नखलोमादीनां छेदेऽपि नाङ्गविकलत्वं पुरुषस्य । त्वगिन्द्रियस्य लक्षणमाह—**स्पर्शग्राहकमिति** कालादावतिव्याप्तिवारणायेन्द्रियमिति । घ्राणादावतिव्याप्तिवारणाय स्पर्शग्राहकमिति । त्वक् त्वगिन्द्रियमित्यर्थः । **तच्च** त्वगिन्द्रियं । त्वगिन्द्रियस्य वायवीयत्वसाधकं **रूपादिष्विति** हेतुमाह । अत्र हेतौ त्वक्संनिकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीति पूरणीयम् ॥ ४३ ॥

**आकरे** प्रशस्तपादभाष्यादौ । ननु प्राणस्यैकत्वेऽपानादिव्यवहारो न स्यादत आह—**नानास्थानवशादिति** "हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः" ॥ १ ॥

इति स्थानभेदादित्यर्थः । अस्यार्थस्तु हृन्मात्रावच्छिन्नः प्राण इत्यादिर्बोध्यः । नानासंज्ञां प्राणापानादिरूपसंज्ञां लभते, न तु संज्ञाभेदेन संज्ञिभेद इति भावः

**॥ इति वायुनिरूपणम् ॥**

**आकाशेति** कालत्वं दिक्त्वं च न जातिरित्यस्याग्रे वक्तव्यत्वेऽपि

किंतु आकाशत्वं शब्दाश्रयत्वम् । वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय । एतेन प्रमाणमपि दर्शितम् । तथाहि । शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत् । शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवत् । इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे, शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत् । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् । नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपवत् । इत्थं च शब्दाधिकरणं नवमं

---

प्रसङ्गल्लाघवादत्रैवाह—**न जातिरिति** । नन्वाकाशत्वस्य जातित्वाभावे किं नामाकाशत्वमित्याकांक्षायामाह—**किंत्विति** । **शब्दाश्रयत्वमिति** समवायसम्बन्धेन शब्दवत्त्वमित्यर्थः । एतेन विशेषगुणत्वकथनेन । **प्रमाणमपीति** अनुमानरूपं प्रमाणमप्याकाशे दर्शितं भवतीत्यर्थः । अनुमानप्रकारश्च—शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्, यन्नैवं तन्नैवं यथा रूपादिकमिति । अत्रानुमाने स्वरूपासिद्धिं वारयति—**तथाहीति** द्रव्यसमवेतत्वसाधकाग्रिमानुमाने स्वरूपासिद्धिनिरासाय शब्दस्य गुणत्वं साधयति—**शब्दो विशेषगुण इति** । घटादौ व्यभिचारवारणाय हेतौ चक्षुर्ग्रहणायोग्येति । आत्मनि व्यभिचारवारणाय बहिरिन्द्रियग्राह्येति । रसत्वत्वादौ व्यभिचारवारणाय जातीति । पूर्वोक्ताकाशसाधकानुमाने विशेष्यासिद्धिनिरासाय शब्दे द्रव्यसमवेतत्वं साधयति—**शब्दो द्रव्यसमवेत इति** । विशेषणासिद्धिनिरासायाह—**शब्दो न स्पर्शवद्विशेषगुण इति** । **अकारणगुणपूर्वकप्रत्यक्षत्वादिति** कारणगुणैर्ये कार्ये गुणा उत्पाद्यंते ते कारणगुणपूर्वकास्तद्भिन्नत्वे सति प्रत्यक्षत्वादित्यर्थः । **पटरूपादाविति** पटरूपादेः कारणगुणपूर्वकत्वादितिभावः । **बहिरिन्द्रियेति** बहिरिन्द्रियत्वं च

द्रव्यं गगननामकं सिध्यति। नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्, अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात्

तत्र शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति—

**इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः।**

नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं कथमाकाशं स्यादिति चेत्तत्राह। एकः सन्नपीत्यादि। आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः॥

कालं निरूपयति—

**जन्यानां जनकः कालो जगतामाश्रयो मतः॥४५॥**

तत्र प्रमाणं दर्शयितुमाह। जगतामिति। तथाहि। इदानीं घट इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सु-

---

मनोभिन्नेन्द्रियत्वं, इत्थं च पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वसिद्धौ च। **सिध्यति** पूर्वोक्तपरिशेषानुमानेन सिध्यतीत्यर्थः। पूर्वोक्ताकाशसाधकानुमाने बाधं स्वरूपासिद्धिं चाह—**नचेति,** कारणगुणपूर्वक इति स्वाश्रयसमवायिसमवेतगुणजन्य इत्यर्थः। **अयावद्द्रव्यभावित्वेनेति** स्वाश्रयनाशजन्यनाशप्रतियोगिभिन्नत्वेनेत्यर्थः॥ ४४॥

नन्वाकाशीयशरीरं विषयं चाप्रदर्श्य कथमिन्द्रियं प्रदर्श्यते "इंद्रियं तु भवेच्छ्रोत्र" मित्यादिनेत्याशंक्याह—**तत्र चेति** आकाशे चेत्यर्थः। अत्र नवीनैरीश्वरातिरिक्त आकाशो न स्वीक्रियते किं त्वीश्वरस्यैव शब्दाश्रयत्वमिति बोध्यं। कैश्चित्तु मृदङ्गादीनामेव शब्दगुणत्वं स्वीकृतं। तदेतत्सर्वमन्यतोऽवसेयम्॥

॥ इत्याकाशनिरूपणम्॥

**कालं निरूपयतीति** तत्र काले प्रमाणमनुमानरूपं **जगतामाश्रयो मत** इति। इदानीं घटस्तदानीं पट इत्यादिप्रतीत्या सर्वाधिकरणत्वेन कालः सिद्ध्यतीतिभावः। अत्र केचित् कालः सर्ववानिति प्रतीत्या सर्वाधारत्वेन

र्यपरिस्पन्दादिना घटादेः संबन्धो वाच्यः। स च संबन्धः संयोगादिर्न संभवतीति काल एव तत्संबन्धघटकः कल्प्यते। इत्थं च तस्याश्रयत्वमपि सम्यक् ॥ ४५ ॥

प्रमाणान्तरं दर्शयति—

**परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः।**

परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव। परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एव कल्प्यत इति भावः। नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो

---

कालसिद्धिरिति व्याख्यांति, तच्चिन्त्यं, तादृशप्रतीतौ प्रमाणाभावात्। नन्विदानीं घट इत्यादिप्रतीतीनां लाघवेन सूर्यपरिस्पन्दादिविषयत्वमेव स्यात् किं कालकल्पनयेत्यत आह—**इदानीमिति**। संयोगादिर्न संभवतीति द्रव्ययोरेव संयोग इति नियमेन संयोगाभावात्। समवायस्तु सूर्यक्रियायाः सूर्येणैवेति संयोगादेरसम्भवादितिभावः। **सम्बन्धघटक** इति स्वाश्रयतपनसंयुक्तसंयोगघटक इत्यर्थः, स्वं सूर्य्यक्रिया तदाश्रयस्तपनस्तत्संयुक्तः कालस्तत्संयोगो घटादावित्येवं सम्बन्धघटक इत्यर्थः। न चाकाश एव सम्बन्धघटकः कल्प्यतामितिवाच्यं, आकाशादिगात्मनां विनिगमनाविरहेण लाघवादतिरिक्तकालस्यैव तथात्वात्। **इत्थं चेति** पूर्वोक्तयुक्त्याकालसिद्धौ। तस्याश्रयत्वं। **सम्यगिति** इदानीं घट इत्यादिप्रतीतीनामतिरिक्तकालविषयत्वस्यैवोचितत्वादितिभावः॥ ४५॥

**परत्वापरत्वादिबुद्धेरिति** रामः परः कृष्णोऽपर इति प्रतीत्या कालिकपरत्वापरत्वासिद्धौ कालसिद्धिरिति भावः **परत्वापरत्वयोरिति** ज्येष्ठकनिष्ठवृत्तिपरत्वापरत्वगुणयोर्भावकार्यतया समवायिकारणत्वमसमवायिकारणत्वं च तयोः कालपिण्डसंयोग एवेत्येवं कालसिद्धिरित्यर्थः। ननु परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादाकाश एवास्तामत आह—**लाघवादिति** आकाशस्य तदाश्रयत्वे जीवात्मभिः प्रत्येकं विनिगमनाविरहेण लाघवादतिरिक्तः काल एव तदाश्रयत्वेन कल्प्यत इतिभावः। **समयभेद इति** समयभेदव्यवहार इत्यर्थः।

न स्यादत आह। क्षणादिरिति। कालस्त्वेकोऽपि उपाधिभेदात्क्षणादिव्यवहारविषयः। उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा। न चोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं, कर्मान्तरस्यापि सत्त्वादिति। महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदानायत्या ध्वंसेनोपपादनीय इति। दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति॥

दिशं निरूपयति—

---

एकस्मिन्विरुद्धनानाव्यवहारविषयत्वाभावादितिभावः। उपाधिभेदादिति तथा चैकस्य कालस्य किंचिद्धर्मावच्छिन्नस्य क्षणत्वं किंचिद्धर्मावच्छिन्नस्य च दिनत्वं न तु केवलस्येतिभावः। स्वजन्येति स्वं क्रिया। अत्रैवं प्रक्रिया—प्रथमतः क्रिया,क्रियातो विभागः,विभागात्पूर्वसंयोगनाशः, तत उत्तरसंयोगः,ततः क्रियानाशः, तत्र स्वजन्यविभागप्रागभावावच्छिन्नं कर्म्म स्वोत्पत्तिकाल एव। द्वितीयक्षण उपाधिमाह—पूर्वेति स्वजन्यविभागनाश्यपूर्वसंयोगावच्छिन्नस्वजन्यविभाग इत्यर्थः। तेन स्वजन्यविभागस्य यत्किंचित्पूर्वसंयोगावच्छिन्नस्य बहुकालवृत्तित्वेऽपि न क्षतिः, न वा यत्किंचिद्विभागस्य स्वजन्यविभागनाश्यपूर्वसंयोगावच्छिन्नत्वेऽपि क्षतिः। तृतीयक्षण उपाधिमाह—पूर्वसंयोगनाशावच्छिन्नेति अत्रापि स्वजन्यविभागजन्यपूर्वसंयोगनाशावच्छिन्नस्वजन्योत्तरसंयोगप्रागभाव इत्यर्थोऽत्र सेयः। चतुर्थक्षणे तमाह—उत्तरसंयोगावच्छिन्नमिति स्वनाशकोत्तरसंयोगावच्छिन्नमित्यर्थः। नन्वेवं महाप्रलये क्षणव्यवहारो न स्यादत आह—महाप्रलय इति वस्तुगत्या महाप्रलये क्षणव्यवहारो नास्त्येवेति यद्यस्तीत्यनेन सूचितं। ध्वंसेनैवेति स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावध्ध्वंसाविशिष्टसमयस्यैव महाप्रलये क्षणव्यवहारविषयत्वमितिभावः, स्वं महाप्रलयसमयस्तद्वृत्तिध्वंसप्रतियोगिप्रतियोगिकयावध्ध्वंसाविशिष्टसमयः महाप्रलयसमय एवेति दिक्॥

॥ इति कालनिरूपणं ॥

**दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥**

दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरतत्वं बोध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव । दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादेका दिक् सिध्यतीति भावः ॥ ४६ ॥

नन्वेकैव दिक् तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यतामित्यत आह

**उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।**

यत्पुरुषस्य उदयगिरिसान्निहिता या दिक् सा तस्य प्राची । एवमुदयगिरिव्यवहिता या दिक् सा प्रतीची । एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची । तद्व्यवहिता त्ववाची । "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः" इति नियमात् ॥

आत्मानं निरूपयति—

**आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥**

आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । ईश्वरेऽपि सा जातिरस्त्येव । अदृष्टादिरूपकारणाभावान्न

---

बीजं प्रयोजकं तदेव स्पष्टयति—**दैशिकपरत्वापरत्वयोरिति** । दीधितिकृतां मते दिक्कालयोरीश्वरातिरिक्तत्वं नास्तीति बोध्यम् ॥

॥ इति दिग्निरूपणम् ॥

**सुखदुःखादीति** यद्यप्यहं सुखीति प्रतीत्यात्मत्वस्य स्वरूपतः प्रत्यक्षमेव सम्भवति, तथापि जातिरूपं तन्न प्रत्यक्षसिद्धमिति जातिरूपात्मत्वसाधनायानुमानप्रयास इति बोध्यम् । नन्वेवमीश्वरे आत्मत्वजातिर्न स्यात्तत्र सुखादिसमवायिकारणताया अभावादत आह—**ईश्वरेऽपीति** फलोपधायकत्वरूपायाः सुखादिसमवायिकारणताया ईश्वरेऽसत्त्वेऽपि स्वरूपयोग्यत्वरूपकारणतायास्तत्र स्वीकारादितिभावः । ननु तर्हीश्वरेऽपि सुखाद्युत्पत्तिः स्यादत आह—**अदृष्टादीति** आदिना शरीरपरिग्रहः । यद्यपीश्वरस्यापि रामादिशरीरमस्ति तथापि

सुखदुःखाद्युत्पत्तिः । नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियमस्याप्रयोजकत्वात् । परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् । न च दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः । इन्द्रियादीति । इन्द्रियाणां शरीरस्य च परंपरया चैतन्यसंपादकः । यद्यप्यात्मनि "अहं जाने अहं सुखी" इत्यादिप्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति । करणमिति । कुठारादीनां छिदादिकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम् । एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते ॥ ४७ ॥

ननु शरीरस्यैव कर्तृत्वमस्त्वत आह—

---

तच्छरीराणां भूतावेशन्यायेन स्वीकारान्नानुपपत्तिलेशोऽपीति सुविचारणीयम् । ननु तथापि नित्यस्य कारणतावच्छेदकधर्म्मवत्त्वे फलावश्यंभाव इति नियमेनेश्वरस्य स्वरूपयोग्यत्वे फलोपधानापत्तिरित्यत आह—**नित्यस्येति** । **आहुरिति** वेदस्थात्मपदस्य ज्ञानवति लक्षणापत्तिरित्यस्वरस आहुरित्यनेन सूचितो बोद्धव्यः । इन्द्रियाणामिति मूलस्थादिपदग्राह्यं दर्शयति—**शरीराणां (शरीरस्य च)** इति परंपरया जनकतासम्बन्धेनावच्छेदकतासम्बन्धेन च चैतन्यसंपादकः ज्ञानवत्त्वसंपादक इत्यर्थः । एतेनात्मनि इन्द्रियाणि शरीरं च ज्ञात्रधिष्ठितं, अचेतनत्वे सति जनकतावच्छेदकतान्यतरसम्बन्धेन ज्ञानवत्वाद्वास्यादिवदित्यनुमानप्रमाणं दर्शितं । अधिष्ठितत्वं चात्र सहकृतत्वस्वरूपं बोध्यं । **यद्यपीति** सुखीत्यादीत्यादिनाऽहं करोमीत्यादिपरिग्रहः । **विप्रतिपन्नं** विवादिनं । प्रथमत एव अनुमानादिरूपयुक्तिप्रदर्शनं विनैवेत्यर्थः । **तत्प्रतीतिगोचरः** अहमितिप्रतीतिविषयः प्रमाणान्तरं प्रत्यक्षातिरिक्तमनुमानमिति यावत् । अतिरिक्तः कर्ता कल्प्यतेऽनुमीयत इत्यर्थः । ॥ ४७ ॥

चार्वाकः शङ्कते—**नन्विति** त्वन्मते नैयायिकमते । तदभावे ज्ञानाभावे । ननु तव मते मृतशरीरे ज्ञानाभावः किंप्रयुक्तः ? मन्मते तु

**शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।**
**तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥**

ननु चैतन्यं ज्ञानादिकमेव मुक्तात्मनां त्वन्मत इव मृतशरीराणामपि तदभावे का क्षतिः, प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न, शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात् । न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पाद्यत इति वाच्यम्, अनन्तसंस्कारकल्पने गौरवात् । एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसाधनतास्मारकाभावात् । मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः । नच जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्, उद्बोधकाभावात् । अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते । इत्थं च संसारस्यानादितया आत्मनोऽनादित्वसिद्धा-

---

प्राणविशिष्टात्मनो विरहप्रयुक्त एवेत्यत आह—**प्राणाभावेनेति** तथा च लाघवात्सर्वत्र प्राणाभाव एव चैतन्याभावे प्रयोजक इति भावः । चार्वाकमतं परिहरति—**नेति स्मरणानुपपत्तेरिति** अन्यदृष्टस्यान्येन स्मरणासम्भवादनुभवाश्रयस्य बाल्यशरीरस्य च तदानीमभावादिति भावः । ननु तदा बाल्यशरीरमस्त्येवेत्यत आह—**शरीराणामिति** उपचयो वृद्धिरपचयो ह्रासः । **संस्कार उत्पाद्यत इति** तथा च स्वजन्यसंस्कारवत्त्वसम्बन्धेन बाल्यशरीरोत्पन्नानुभवस्य स्थविरशरीरेऽसत्त्वेऽपि स्वप्रयोज्यसंस्कारवत्त्वसम्बन्धेन तत्र तस्य सत्त्वान्न स्मरणानुपपत्तिरितिभावः । गौरवस्य फलमुखत्वाद्दूषणान्तरमाह—**एवमिति** तद्धेतुत्वात्प्रवृत्तिहेतुत्वात् । **तदानीं** स्तन्यपानप्रवृत्त्यव्यवहितपूर्वकाले । ननु तवापि मते प्रवृत्त्यन्यथानुपपत्तिः समानेत्याशंक्य स्वमते प्रवृत्त्यन्यथानुपपत्तिं परिहरति—**मन्मते त्विति** । अन्यदपीष्टसाधनत्वादतिरिक्तमपीत्यर्थः । **अत्र तु** पूर्वोक्तप्रवृत्तिजनकेष्टसाधनत्वस्मरणे तु अनायत्याऽगत्येत्यर्थः । आत्मनो नित्यत्वं साधयति—**इत्थं चेति** प्राक्तनसंस्कारजन्यस्तन्यपानप्रवृत्त्यनुकूलेष्टसाधनतास्मरणे च ।

वनादिभावस्य नाशासंभवान्नित्यत्वं सिद्ध्यतीति बोध्यम् । ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्तु विरोधे साधकाभावादत आह । तथात्वमिति । चैतन्यमित्यर्थः । उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव। कथं स्मृतिः पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात्। अनुभवितुरभावात् । अन्यदृष्टस्यान्येन स्मरणासंभवात् । अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः॥४८॥

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह

**मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।**
**धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥**

मनोपीति । न तथा, न चेतनम् । ज्ञानादीति । मनसोऽणुत्वा-

---

अनादेरपि प्रागभावस्य नाशसम्भवादाह **भावस्येति** । **नाशासम्भवादिति** प्रागभावप्रतियोगिकातिरिक्तनाशं प्रति जन्यभावत्वेन हेतुत्वादात्मनोऽनादितया जन्यभावत्वरूपहेतोरसत्त्वेन नाशासम्भवादित्यर्थः

॥ इति चार्वाकमतखण्डनम् ॥

**नन्विति, कर्तृत्वमिति** कृत्याश्रयत्वमपि चक्षुरादीनामेवास्त्वित्यर्थः । विरोधे विभिन्नाधिकरणत्वे । **साधकाभावादिति** सर्प आत्मना आत्मानं वेष्टयतीत्यादौ कर्तृत्वकरणत्वादिरूपविलक्षणोपाधिभेदेनैकस्मिन्नपि कर्तृकरणव्यवहारस्य दृष्टत्वादितिभावः । स्मृत्यभावे हेतुं पूरयति—**पूर्वमिति** । नन्विन्द्रियान्तरेणैव स्मरणं भविष्यतीत्यत आह—**अन्यदृष्टस्येति** । **सामानाधिकरण्येनेति** यत्र समवायेनानुभवो भवति तत्रैव समवायेन स्मृतिं जनयत्यन्यथा देवदत्तानुभूतं यज्ञदत्तोऽपि स्मरेदितिभावः ॥ ४८ ॥

चक्षुरादीनां चैतन्यपक्षे यो दोषः सोऽस्मिन्पक्षे नास्तीति सूचयितुं नित्यस्येत्युक्तं । मनसश्चैतन्यत्वे ज्ञानादेरप्रत्यक्षत्वं " अनध्यक्षं तदा भवेदिति " मूलेनोक्तं तत्र हेतुं पूरयति—**मनस इति** । **महत्त्वस्य हेतुत्वादिति** परमा-

त्प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः । यथा मनसोऽणुत्वं तथा वक्ष्यते ॥ नन्वस्तु क्षणिकविज्ञानमेवात्मा, तस्य स्वतः प्रकाशरूपत्वाच्चेतनत्वम्, ज्ञानसुखादिकं तु तस्यैवाकारविशेषः, तस्यापि भावत्वादेव क्षणिकत्वं पूर्वपूर्वविज्ञा-

---

ण्वादिप्रत्यक्षवारणाय महत्त्वस्य प्रत्यक्षे हेतुत्वस्वीकारादितिभावः । यद्यपि मानसान्यप्रत्यक्षत्वावच्छिन्नं प्रत्येव महत्त्वस्य कारणत्वस्वीकारे परमाण्वादेः प्रत्यक्षापत्तिर्न सम्भवतीति ज्ञानादेर्मनसि स्वीकारेऽपि नैष दोषस्तथापि मानसान्यत्वप्रत्यक्षत्वयोर्विशेषणविशेष्यभावे विनिगमनाभावेन गुरुभूतकार्यकारणभावद्वयापत्तेर्न तथोपगमः । न चातिरिक्तात्मवादिनां मतेऽनंतजीवकल्पनापेक्षयाऽस्मन्मते कारणताद्वयकल्पनेऽपि न गौरवमिति वाच्यं, अनेकजीवकल्पनागौरवस्य फलमुखत्वेनादोषत्वात् । यदि च फलमुखगौरवस्यापि दोषत्वं तदाप्यहं सुखीत्यादिसाक्षात्काराणां कार्य्यत्वादिना जन्यसाक्षात्कारत्वादिना वा चाक्षुषादिवत् करणातिरिक्तकर्तृजन्यत्वं सिध्यत्येव, तस्य च कर्तुर्महत्त्वमणुत्वं वेति विषयान्तरमेतदिति दिक् । तत्प्रत्यक्षानुपपत्तिः ज्ञानसुखादिप्रत्यक्षानुपपत्तिरित्यर्थः । ननु मनसोऽणुत्वमेवासिद्धमत आह—**यथा चेति**, अग्रे मनोनिरूपणावसरे "अयौगपद्याज्ज्ञानाना" मित्यादिना वक्ष्यते साधयिष्यत इत्यर्थः॥

## ॥ इतीन्द्रियाणां चैतन्यवादिमतखण्डनम् ॥

विज्ञानवादी बौद्धः शङ्कते **नन्विति** यद्यपि तेषां मते वस्तुमात्रस्यैव विज्ञानस्वरूपत्वमस्ति तथाप्यात्मनिरूपणस्य प्रस्तुतत्वादात्मेत्युक्तमिति बोध्यम् । तस्य विज्ञानस्वरूपस्यात्मनः । **क्षणिकत्वमिति** यत्सत्तत्क्षणिकमिति व्याप्तेरितिभावः । नन्वेवं सुषुप्तावात्मा न सिद्धयेत्पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशाद्विज्ञानान्तरस्य च तदानीं पुरीततिवहिर्देशावच्छिन्नात्ममनःसंयोगस्याभावेनोत्पत्तेरसम्भवादत आह—**पूर्वपूर्वेति** । **आलयेति** द्विविधं हि विज्ञानमालयविज्ञानं प्रवृत्तिविज्ञानं चेति । तत्रायं घट इति प्रवृत्तिविज्ञानमहमित्याकारकं ज्ञानमालयविज्ञानं, तदालयविज्ञानधारा सुषुप्तिकालेऽपि कारणसत्त्वात्तिष्ठत्येवेति

नस्योत्तरोत्तरविज्ञाने हेतुत्वात् सुषुप्तावप्यालयविज्ञानधारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न, तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः । यत्किंचिद्विषयकत्वे विनिगमनाविरहः । सुषुप्तावपि विषयावभासप्रसङ्गाच्च । ज्ञानस्य सविषयत्वात् । तदानीं निराकारा चित्सन्ततिरनुवर्तत इति चेन्न, तस्याः स्वप्रकाशत्वे प्रमाणाभावात् । अन्यथा घटादीनामपि ज्ञानत्वापत्तिः । न चेष्टापत्तिर्विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यं, घटादेरनुभूयमानस्यापलपितुमशक्य-

---

भावः । ननु संस्कारस्यापि भवन्मते क्षणिकत्वेन तदानीमेव नाशात्कालान्तरे स्मरणं न स्यादित्याशङ्कायामाह—**मृगमदेति** मृगमदः कस्तुरी तद्वासनया सुगन्धेन वासितवसन इव सुगन्धितवस्त्रवदित्यर्थः । विज्ञानस्य सर्वविषयकत्वं यत्किंचिद्विषयकत्वं वेति विकल्प्याद्ये दूषणमाह—**तस्येति** आत्मस्वरूपविज्ञानस्येत्यर्थः । द्वितीये दूषणमाह—**यत्किंचिदिति** नियतयत्किञ्चिद्विषयत्व इत्यर्थः । **विनिगमनाविरह** इति यदि घटविषयकस्तदा पटविषयकः कथं न ? यदि च पटविषयकस्तदा घटविषयकः कथं न ? इति विनिगमनाविरह इत्यर्थः । ननु विज्ञानस्य न सर्वविषयकत्वं, नापि नियतयत्किंचिद्विषयकत्वं, किं तु यस्य विज्ञानस्य यद्विषयकत्वमनुभवसिद्धं तस्य तद्विषयकत्वं कल्प्यतेऽनुभवानुसारित्वात्कल्पनाया इति स्वभावो हेतुरित्यतो दूषणान्तरमाह—**सुषुप्ताविति** सुषुप्तिकालीनालयविज्ञानस्य स्वमात्रविषयकत्वस्वीकारेऽपि तस्यैव सुषुप्तिकाले भानप्रसङ्ग इतिभावः । **ज्ञानस्य सविषयत्वादिति** ज्ञानत्वस्य सविषयत्वव्याप्यत्वादित्यर्थः । **तदानीं** सुषुप्तिकाले । **निराकार** निर्विषया **चित्संतति-** विज्ञानधारा । तस्या निर्विषयाया विज्ञानधारायाः **प्रकाशत्वे** ज्ञानत्वे प्रमाणाभावात् ज्ञानत्वं सविषयत्वव्याप्यं न भवतीत्यत्र प्रमाणाभावादिति तात्पर्यार्थः । **अन्यथा** ज्ञानत्वव्यापकविषयिताया अभावेऽपि तत्र ज्ञानत्वस्वीकारे । **अनुभूयमानस्येति** सर्वानुभवसिद्धस्य घटादेर्विज्ञानातिरिक्तं वस्तु नास्त्येवेति

त्वात्। आकारविशेष एवायं विज्ञानस्येति चेत्, किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यतिरिक्तेन। नातिरिच्यते चेत्तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात्। स्वरूपतो विज्ञानस्याविशेषात्। अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न, नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात्। इतरथा विरोधावधारणस्यैव दुरुपपादत्वात्। न वा वासनासंक्रमः संभवति, मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात्। न चोपादानोपादेयभावो नियामक इति वाच्यं, वासनायाः संक्रमासं-

---

निषेधयितुमशक्यत्वादित्यर्थः। ननु नास्माभिर्घटादेर्निषेधः क्रियते, किं तु घटादौ विज्ञानव्यतिरिक्तत्वनिषेध इत्याह—**आकारविशेष एवेति** विज्ञानस्यैव स्वरूपविशेष इति च तदर्थः। आकारस्य विज्ञानातिरिक्तत्वमनतिरिक्तत्वं चेति विकल्प्याद्ये दूषणमाह—**तर्हीति** घटादिरूपाकारस्य विज्ञानातिरिक्तत्वस्वीकारे। द्वितीये त्वाह—**समूहालम्बन इति** नीलपीते इमे इति समूहालम्बन इत्यर्थः। **स्यादिति** तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादितिभावः। एतदेव स्पष्टयति—**स्वरूपत इति**। ननु नीलाकारपीताकारयोरभेद एव, भेदप्रतीतिस्तु नीलत्वपीतत्वरूपधर्मभेदप्रयुक्तेत्यभिप्रायेणाशङ्कते—**अपोहरूप इति** अनीलव्यावृत्तिरूपोऽभावरूप इतियावत्। तथा च नीलपीतयोर्विज्ञानस्वरूपत्वेनाभेदेऽपि अभावरूपस्य नीलत्वादेः सत्स्वरूपत्वाभावेन विज्ञानस्वरूपत्वाभावात्परस्परभेदसाधकत्वसंभव इति भावः। इतरथा विरुद्धनीलत्वादीनामेकाधिकरणवृत्तित्वेनावधारणे। **दुरुपपादत्वादिति** तथा च तयोर्भेदसाधकत्वमेव न स्यादिति भावः ननु नीलपीते इमे इत्यादिसमूहालम्बने न नीलाकारो नापिपीताकारो भासते, किं तु चित्राकार एवेति न पूर्वोक्तो दोष इत्यतो वासनासंक्रममेव मुख्यतया दूषयति—**न वेति**। **उपादानोपादेयेति** उपादानत्वं चात्रासहकृतकारणत्वं उत्तरव्यक्तौ पूर्वव्यक्तिमात्रस्यैव तैः कारणत्वस्वीकारादुत्तरव्यक्तिं प्रति पूर्वव्यक्तेरुपादानकारणत्वं भवति, माता तु पुत्रं प्रति नासहकृतं कारणं शुक्रशोणितयोरपि पुत्रकारणत्वादिति बोध्यम्। तथा च मातुरुपादानकारण-

भवात् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न, तदुत्पादकाभावात् । चितामेवोत्पादकत्वे तदानन्त्यप्रसङ्गः । क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यत इति चेन्न, मानाभावात्कल्पनागौरवाच्च । एतेन क्षणिकशरीरेष्वेव चैतन्यमपि प्रत्युक्तं, गौरवादतिशये मानाभावाच्च । बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनाच्च ।

---

त्वाभावान्न मातृपुत्रयोर्वासनासंक्रमः सम्भवतीतिभावः । **तदुत्पादकेति** वासनोत्पादकाभावादित्यर्थः । चितां ज्ञानानां संस्कारानन्त्यप्रसङ्गः ज्ञानानामानन्त्यात्तज्जन्यसंस्काराणामप्यानन्त्यापत्तिरित्यर्थः । **क्षणिकेति** अयमाशयः—ज्ञानानां संस्कारोत्पादकत्वे प्रतिज्ञानव्यक्तिभिन्नभिन्नसंस्कारव्यक्तिकल्पनगौरवेऽपि यादृशज्ञानव्यक्त्युत्तरं स्मरणमनुभवसिद्धं तज्ज्ञाननिष्ठसंस्कारानुकूला काचिच्छक्तिः पूर्वज्ञानव्यक्तौ कल्प्यते, न तु सर्वज्ञानव्यक्ताविति न संस्कारानन्त्यमिति । **गौरवादिति** अनन्तपदार्थानां क्षणिकत्वकल्पनागौरवादित्यर्थः । ननु प्रामाणिकं गौरवं न दोषायेति चेन्न, स एवायमित्यापामरप्रत्यभिज्ञानात्क्षणिकत्वस्य प्रामाणिकत्वासिद्धेः । **एतेनेति** पूर्वोक्तयुक्त्या क्षणिकशरीरेषु यत्कैश्चिच्चैतन्यमुक्तं तदपि खण्डितमित्यर्थः । ननु क्षेत्रस्थबीजादङ्कुरोत्पत्तिर्भवति न तु कुसूलस्थबीजादित्यनुभवसिध्धं, तथा च यदि क्षेत्रस्थबीजस्य कुसूलस्थबीजेनाभेदः स्यात्तदा कुसूलस्थबीजादप्यङ्कुरोत्पत्तिः स्यादतस्तयोर्भेद एवेति मन्तव्यं, भेदश्च क्षणिकत्वं विना नोपपद्यते, तथा च यथा क्षणिकानन्तबीजानां मध्ये फलोपधायकसमर्थबीजमात्र एवाङ्कुरजनकतावच्छेदकतया कुर्वद्रूपत्वं कल्प्यते तेन रूपेण चाङ्कुरत्वावच्छिन्नं प्रति बीजानां कारणत्वमेवमेवेहापि कुर्वद्रूपत्वकल्पनेनैव तत्तत्क्षणिकशरीरेषु तत्तच्छरीरनिष्ठवासनोत्पादकत्वं कल्प्यतामत आह—**बीजादावपीति** । **सहकारीति** धरणिसलिलसंयोगादीनां समवधानासमवधानाभ्यामेवोपपत्तेः कुसूलस्थबीजादङ्कुरोत्पत्तिवारणसम्भवादित्यर्थः । तथा च न बीजानां क्षणिकत्वमपि, गौरवात्प्रमाणाभावाच्चेति दिक्.

॥ इति क्षणिकवादिखण्डनम् ॥

अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा " अविनाशी वाऽरेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म " इत्यादिश्रुतेरिति चेन्न, तस्य विषयकत्वासंभवस्य दर्शितत्वान्निर्विषयस्य ज्ञानत्वे मानाभावात्सविषयत्वस्याप्यननुभवात् । अतो ज्ञानादिभिन्नो नित्य आत्मेति सिद्धम्। सत्यं ज्ञानमिति हि ब्रह्मपरं जीवेषु नोपयुज्यते । ज्ञानाज्ञानसुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः, अन्यथा बन्धमोक्षव्यवस्था-

---

वेदान्ती शङ्कते- **अस्तु तर्हीति** । सर्वप्रमाणेभ्यः श्रुतेरेव मुख्यत्वमतः तत्र श्रुतिं प्रमाणयति—**अविनाशी वेत्यादि** । आत्ममात्रस्य नित्यविज्ञानस्वरूपत्वमीश्वरस्य वेति विकल्प्याद्ये दूषणमाह—**तस्येति** । आत्मनः सविषयासम्भवस्य दर्शितत्वाद्बौद्धमतखण्डनावसरे "तस्य जगद्विषयकत्वे" इत्यादिग्रन्थेन दर्शितत्वादित्यर्थः । मानाभावाद् ज्ञानत्वस्य सविषयत्वव्याप्यत्वादितिभावः । ननु विज्ञानस्वरूपस्यात्मनः यत्किञ्चिद्विषयकत्वे सुषुप्तावपि विषयावभासप्रसङ्ग एवान्ततो गत्वा दूषणत्वेनोपात्तः स चेष्ट एव सुखमहमस्वाप्समिति प्रतीतेस्तदानींतनसुखानुभवपूर्वकत्वेन सुषुप्तावपि सुखादिरूपविषयस्यावभासनादत आह—**सविषयकत्वस्यापीति** अननुभवान्नहि घटविषयकोऽहमपि तु घटविषयकज्ञानवानहमित्येवानुभवान्न सविषयकत्वमात्मनोऽनुभवसिद्धमितिभावः । **नित्य आत्मेति** अनित्यत्वे बालकस्य स्तन्यपाने प्रवृत्त्यसम्भवादितिभावः । ननु पूर्वोक्तश्रुतिरेव जीवस्य विज्ञानस्वरूपत्वे प्रमाणमत आह—**सत्यं ज्ञानमिति** । ननु जीवब्रह्मणोरैक्याद् ब्रह्मणो ज्ञानस्वरूपत्वे जीवस्यापि नित्यविज्ञानस्वरूपत्वं निराबाधमतस्तयोर्भेदं साधयति—**ज्ञानाज्ञानेति** । **सुतरामीश्वरभेद इति** ईश्वरजीवात्मनोर्भेद इत्यर्थः, जीवानामनेकत्वसिद्धावीश्वरस्यैकस्यानेकजीवात्मकत्वासम्भवादितिभावः । नन्वेकस्मिन्नप्याकाशे विभिन्नकर्णशष्कुल्यवच्छेदेन शब्दतदभावयोरिवैकस्मिन्नपि ब्रह्मणि जीवोपाध्यन्तःकरणानामनन्ततया तत्तदन्तःकरणावच्छेदेन विलक्षणसुखित्वाद्यनुभवो न विरुद्ध इत्यत आह—**अन्यथेति** ईश्वरस्य जीवात्मकत्वे । **बन्धमोक्षेति** कश्चिद्बद्धः

नुपपत्तिः। योऽपीश्वराभेदबोधको वेदः सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन्स्तौति। अभेदभावनयैव च यतितव्यमिति वदति। अत एव "सर्व एवात्मनि समर्पिताः" इति श्रूयते। मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न, भेदस्य नित्यत्वेन नाशायोगात्। भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव। न च द्वित्वमपि नश्यतामिति वाच्यं, तत्र निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवद्-

---

कश्चिच्च मुक्त इति व्यवस्था न स्यादित्यर्थः। चैत्राद्यात्मनामीश्वरस्वरूपत्वे- नैक्यादितिभावः। ननु निखिलान्तःकरणावच्छिन्नचेतनस्यैकत्वेऽपि यस्यान्तः- करणस्य नाशस्तदन्तःकरणावच्छिन्नचेतनस्य मुक्तव्यवहारः, यस्य च न नाशस्तदन्तःकरणावच्छिन्नचेतने बद्धव्यवहार इति न बद्धमुक्तव्यवस्थाया अनुपपत्तिरिति चेन्न, एवमपि एकान्तःकरणस्य नाशेऽप्यन्यान्तःकरणावच्छिन्ने स्वात्मन्येव दुःखोत्पत्तेरावश्यकत्वात्प्रवृत्तिफलस्य निर्दुःखत्वस्यासम्भवेन मोक्षार्थं प्रयत्नवैफल्यापत्तेर्दुर्निवारत्वादिति दिक्। नन्वेवं तर्हि तत्त्वमसीत्यादिवेदेन जीवेश्वरयोरभेदः कथं प्रतिपाद्यते ? अत आह—**योऽपीति** सोऽपि तत्त्वमसीत्यादिवेदः, **तदभेदेन** ईश्वराभेदेन **तदीयत्व**मीश्वरीयत्वं। ननु स्तुतौ किं प्रयोजनमत आह—**अभेदभावनयेति**। तथा च यथात्मनो भिन्नमपि शरीरमभेदाध्यासेन महाप्रियं भवत्येवं जीवेश्वरयोर्भेदेऽपि अभेदभावनयेश्वरे जीवस्य दृढतरा प्रेमलक्षणा भक्तिर्भविष्यतीतिभावः। नन्वतिस्मरणाद्यथा कीटस्य भ्रमराकारता भवतीत्यनुभवसिद्धं तद्वदिहापीश्वरस्यात्यन्तस्मरणाज्जीवस्यापीश्वराकारता भविष्यत्येवेत्यत आह—भेदनाशेऽपीति। तथा च तत्रापि यथा व्यक्तिद्वयमनुभवसिद्धमेवमिहापि जीवेश्वरयोर्व्यक्तिद्वयं तिष्ठत्येवेतिभावः **न च द्वित्वमपीति** शुद्धे ब्रह्मणि कस्यचिदपि धर्म्मस्यास्वीकारादितिभावः। तत्र वेदान्तिनः निर्धर्म्मक इति विशेषणं सत्यत्वाभावेऽपीत्यत्र हेतुतयोक्तं बोध्यम्। ननु ब्रह्मणो निर्धर्म्मकत्वं नाम स्वभिन्नधर्म्मशून्यत्वं मिथ्यात्वाभावरूपस्य सत्यत्वस्य तु नेश्वरातिरिक्तत्वमधिकरणात्मकत्वादभावानां

द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात् । मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेदेकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्यप्युच्यताम् । प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनासिद्धत्वात् । योऽपि तदानीमभेदप्रतिपादको वेदः सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति । संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत्, अत एव " निरञ्जनः परमं साम्यमुपैति " इति श्रूयते । ईश्वरोपि न ज्ञानसुखात्मा किंतु ज्ञानाद्याश्रयः " नित्यं विज्ञानमानन्दं ब्रह्म " इत्यादौ विज्ञानपदेन ज्ञाना-

---

। तथा च मिथ्यात्वाभावरूपस्य सत्यत्वस्य ब्रह्मणि सत्त्वात्सत्यं तदिति व्यवहारः सम्भवति, सङ्ख्यारूपस्य द्वित्वस्य तु ब्रह्मणि निर्धर्मकत्वेनासत्त्वाद्व्यक्तिद्वयात्मकौ ताविति व्यवहारासम्भव एवेत्यभिप्रायेण शङ्कते—**मिथ्यात्वाभाव इति,** तत्र ब्रह्मणि उत्तरयति—**एकत्वाभाव इति,** तथा च सङ्ख्यारूपस्य द्वित्वस्य तत्रासत्त्वेऽपीदृशद्वित्वसत्त्वादेव व्यक्तिद्वयात्मकौ ताविरयस्यापि सुवचत्वादितिभावः । नन्वेकत्वाधिकरणे तदभावरूपं द्वित्वं न सम्भवतीत्यत आह—**प्रत्येकमिति** । एकत्र विद्यमानस्यापि तत्रैवोभयत्वावच्छेदेन तदभावो लोकसिद्ध एवेति दृष्टान्तद्वारा द्रढयति—**पृथिवीजलयोर्न गन्ध इतिवदिति** । ननु ब्रह्मविद्ब्रह्मैव भवतीत्यादिश्रुतेर्मोक्षावस्थायामभेदप्रतिपादिकायाः का गतिरत आह—**योऽपीति,** तदानीं मोक्षावस्थायां । लोकेऽपि समानतायामभेदव्यवहारो दृश्यत इत्याह—**सम्पदाधिक्य इति** । अत एव अभेदप्रतिपादकश्रुतीनां साम्यप्रतिपादकत्वादेव निरंजनो निर्दुःखः तत्त्वज्ञानवानिति यावत् । नात्ममात्रस्य ज्ञानरूपत्वं, किं त्वीश्वरस्यैवेति द्वितीयपक्षे दोषमाह—**ईश्वरोऽपीति** । नन्वेवं नित्यं विज्ञानमित्यत्रोक्तं विज्ञानस्वरूपत्वं विरुध्येतेत्यत आह—**विज्ञानाश्रय एवोक्त इति** अधिकरणल्युडन्तेन विज्ञानाश्रयत्वबोधनादितिभावः । ननु सत्यं विज्ञानमितिश्रुत्यंतर्गतविज्ञान-

श्रय एवोक्तः “ यः सर्वज्ञः स सर्ववित् ” इत्यनुरोधात् । आनन्द-मित्यस्याप्यानन्दवदित्यर्थः । अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः, अन्यथा पुँल्लिङ्गत्वापत्तिः । आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखी संवृत्तोऽहमितिवत्. दुःखाभावेन सुखित्वप्रत्ययात् । अस्तु वा तस्मिन्नानन्दो नत्वसावानन्दः “ असुखम् ” इति श्रुतेः ।

---

पदस्य विज्ञानाश्रयत्वबोधकत्वे किं बीजमत आह—**अनुरोधादिति,** तथा चैतच्छ्रुत्यन्तर्गतसर्वज्ञपदस्य सर्ववित्पदस्य च सर्वविषयकज्ञानवानित्यर्थो निर्विवाद एवेत्यत पूर्वोक्तश्रुत्यन्तर्गतविज्ञानपदस्यापि विज्ञानाश्रयत्वमेवार्थः कल्प्यते। अन्यथा वेदस्य परस्परविरुद्धार्थप्रतिपादकत्वेनाप्रामाण्यं स्यादितिभावः । ननु सत्यं विज्ञानेतिश्रुत्यन्तर्गतविज्ञानपदस्य विज्ञानाश्रयत्वार्थकत्वेऽप्यानन्दपदस्य त्वानन्दस्वरूपत्वमेवार्थ इत्यत आह—**आनन्दमित्यस्यापीति** । ननु सुखवाचकस्यानन्दपदस्यानन्दवत्त्वमर्थः कुतो लभ्यत इत्यत आह—**अर्शआदित्वान्मत्वर्थीयोऽच् प्रत्यय इति,** तथा च तदस्यास्तीत्यर्थे अर्शआदिभ्योऽजिति सूत्रेणाच्प्रत्ययविधानाच्छ्रुत्यन्तर्गतानन्दपदस्यानन्दवत्त्वमेवार्थ इति भावः । ननु श्रुत्यन्तर्गतानन्दपदस्य मत्वर्थीयाच्प्रत्ययान्तत्वं कथं ज्ञातमत आह—**अन्यथेति** श्रुत्यन्तर्गतानन्दपदस्य मत्वर्थीयाच्प्रत्ययान्तताऽस्वीकार इत्यर्थः। **पुल्लिङ्गत्वापत्तेरिति** “ स्यादानन्दथुरानन्दः शातशर्मसुखानि चेति ” कोशेन सुखवाचकानन्दपदस्य नित्यपुल्लिङ्गत्वाभिधानादितिभावः । न च “ छन्दसि सर्वे विधयो विकल्प्यन्त” इतिन्यायादत्र छान्दसं नपुंसकत्वमिति वाच्यं, गत्यन्तराभाव एव छान्दसत्वाश्रयणात । ननु तव मतेनेश्वर आनन्दस्याप्यभावादानन्दवदित्यर्थोऽपि न संगच्छत इत्यत आह—**आनन्दोऽपीति** । **दुःखाभाव उपचर्य्यत इति** आनन्दपदं दुःखाभावे लाक्षणिकमित्यर्थः, सुखवाचकशब्दानां दुःखाभावेऽपि बहुधा लक्षणया प्रयोगो दृश्यत इत्याह—**भारेति** । लक्षणाकल्पनरूपं गौरवमेव तत्र दोष इत्यत आह—**अस्तु वेति,** तस्मिन्नीश्वरे, असौ ईश्वरः, आनन्दस्वरूपाभावे श्रुतिं प्रमाणयति—**असुखमिति** सुखभिन्नं ब्रह्मेति

**न विद्यते सुखं यस्येति कुतो नार्थ इति चेन्न, क्लिष्टकल्पनापत्तेः, प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्रत्ययाविरोधाच्चेति संक्षेपः ।**

**एतेन प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः किंतु चेतनः। कार्यकारणयोरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशोऽपि न**

---

च तदर्थः, तथा च वेदेनापि ब्रह्मणि सुखभेदबोधनान्न सुखस्वरूपत्वं तस्येतिभावः । **क्लिष्टकल्पनापत्तेरिति** बहुव्रीहावन्यपदार्थलाभार्थमन्यपदार्थे नञो लक्षणापत्तेरित्यर्थः । सुखभिन्नं ब्रह्मेत्यत्रापि बोधे यथाकथञ्चिल्लक्षणापत्तिमाशङ्क्याह—**प्रकरणविरोधादिति** नञ्तत्पुरुषनिष्पन्नपदपरंपरापाठितस्वरूपप्रकरणविरोधादित्यर्थः। तथा च "अस्थूलमनणु अदीर्घमित्यादौ" सर्वत्र नञ्तत्पुरुषप्रदर्शनेन तत्सन्निधौ पठितस्यासुखमिति पदस्यापि नञ्तत्पुरुष एव श्रद्धेयो बहुव्रीहिनिष्पन्नत्वे प्रकरणविरोधापत्तेरितिभावः। संक्षेपः वेदान्तिमतविचारस्येति शेषः॥

॥ इति वेदान्तिमतखण्डनम् ॥

**एतेनेति** वक्ष्यमाणप्रकारेण " इति मतमपास्तमिति " परेणान्वयः । **प्रकृतिः** मूलप्रकृतिः । कर्त्री कर्तृभूतान्तःकरणकारणमित्यर्थः, न त्वनुकूलकृतिमत्त्वं, तस्य तन्मतेऽन्तःकरणधर्मत्वात् । पुष्करपलाशवत् पद्मपत्रवदित्यर्थः, यथा पद्मपत्रं जले वर्तमानमप्यम्भसा लिप्तं न भवति तथा सर्वगतोऽपि पुरुषः कर्तृत्वाद्याश्रयो न भवतीतिभावः । नन्वहं करोमीतिप्रतीतिः पुरुषस्यैव कर्तृत्वं स्यादत आह—**कार्यकारणयोरिति** अभेदात्तादात्म्यादित्यर्थः । तन्नाशोऽपीत्यपिशब्दः कार्य्यरूपतयेत्यस्याग्रे योजनीयः पुरुषस्य घटादिकारणत्वे कार्य्यकारणयोरभेदाद्घटादिकार्यनाशे घटादिरूपेण पुरुषस्यैव नाशो जातस्तथा च पुरुषस्य सर्वथा कूटस्थत्वं व्याहन्येतेत्यतः पुरुषस्य न कारणत्वमितिभावः । यद्वा कार्यनाशे सतीत्यस्य कार्यनाशेऽनुभवसिद्धे सत्यपि कार्य्यरूपतया पुरुषस्येति शेषः तन्नाशोऽपि घटादिकार्य्यनाशोऽपि न स्यादित्यापतितमित्यर्थो बोध्यः । पुरुषस्य घटादिकारणत्वे घटादिकार्य्यनाशोऽपि न स्यात्कार्य्यकारणयोरभेदात्पुरुषरूपत्वाद्घटादीनां पुरुषस्य चनित्यत्वेन

स्यादित्यकारणत्वं तस्य । बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम् । बुद्धिश्च प्रकृतेः परिणामः । सैव महत्तत्त्वम् , अन्तःकरणमित्युच्यते । तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ । तस्या एवे-

---

नाशरूपविकारासम्भवादितिभावः । अकारणत्वं तस्य पुरुषस्येत्यर्थः । नन्वेतादृशपुरुषसत्त्वे किं मानमत आह—**बुद्धिगतेति** । **चैतन्याभिमानेति** । चैतन्यं च साङ्ख्यमते विज्ञानत्वं, **अन्यथानुपपत्त्या** पुरुषं विनानुपपत्त्येत्यर्थः। **तत्कल्पनं** पुरुषकल्पनं कुत्रचित्प्रसिद्धस्यैव चैतन्यस्य बुध्यावारोपसम्भवादितिभावः । ननु का नाम बुध्धिरित्यत आह—**बुद्धिश्चेति,** प्रकृतेः मूलप्रकृतेरित्यर्थः । सैव मूलप्रकृतिपरिणामरूपा बुध्धिरेव महत्तत्त्वनामधेया अन्तःकरणनामधेया च बुध्धिरेवेत्यर्थः । ननु पुरुषस्याकर्तृत्वे पुरुषस्य दुःखध्वंसरूपो मोक्षो न स्यात् पुरुषेऽकर्तृत्वेन धर्म्माधर्म्माद्यनुत्पत्त्या दुःखादेरनुत्पादादत आह—**तत्सत्त्वासत्त्वाभ्यामिति** बुध्धिसत्त्वासत्त्वाभ्यामित्यर्थः । बुध्धिसत्त्वे इन्द्रियद्वारा बहिर्निर्गताया बुध्धेर्घटादिदेशप्राप्तौ घटाद्याकारेण परिणतिर्जायते, सैव ज्ञानमित्युच्यते, तादृशज्ञानेन सम्बध्धो घटादिर्विषयः स्वाकारज्ञानकारणबुध्धया अगृहीतभेदकत्वसम्बन्धेन पुरुषनिष्ठः सन् पुरुषस्वरूपतिरोधानेन पुरुषस्य संसारापादको भवति । बुध्धिनाशे तु तत्परिणामस्य घटाद्याकारस्याभावेन विषयसम्बन्धभानाभावात्पुरुषस्य कैवल्यावस्थानरूपो मोक्षः सिद्ध एवेति भावः । बुध्धौ भेदज्ञानाभावात् पुरुषे बध्ध इति व्यवहारो न वास्तविकः, दुःखसम्बन्धस्य बुध्धावेव सत्त्वात्, भेदग्रहे बुद्धिनिवृत्तौ तु पुरुषस्य मोक्षः सिद्ध एव । तथा च पुरुषे बद्धमुक्तव्यवहार औपचारिक एव दुःखसम्बन्धतद्ध्वंसरूपबन्धमोक्षयोर्बुध्धावेव सत्त्वात् । तथा चोक्तं "बध्यते मुच्यते च नानाश्रया प्रकृतिरिति" तात्पर्य्यार्थः । बुध्धौ भेदाग्रहश्च बुध्धिसान्निध्यरूपदोषादेवेति बोध्यम् । ननु विषये पुरुषस्य साक्षात्सम्बन्ध एव कथं न कल्प्यत इत्यत आह—**तस्या एवेति** बुध्धेरेवेत्यर्थः, घटादिना सम्बन्धो नाम परिणतिर्ज्ञानरूपा । तथा च विषये बुध्धेरेव साक्षात्सम्बन्धः

न्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना संबन्धः । पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात् । ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया तत्प्रतिविम्वादतात्त्विको दर्पणस्येव मुखोपरागः। इदमिति विषयोपरागः, इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निःश्वासाभिहतदर्पणस्येव मलिनिमा। कर्तव्यमिति व्यापारांशः । तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः

---

। पुरुषस्य स्वातन्त्र्येण सम्बन्धस्वीकारे तु पुरुषस्याप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वेन तत्स्वभावाधीनविषयसम्बन्धस्य नित्यत्वप्राप्त्या मोक्षाभाव एव स्यादितिभावः । यद्वा बुद्धितो ज्ञानस्य भेदमाह—**तस्या एवेति** तथा च बुद्धेः परिणतिरेव ज्ञानं, न तु बुद्धिरेवेतिभावः । ननु चेतनोऽहं करोमीति प्रतीतिरेव विषयेण पुरुषस्य साक्षात्सम्बन्धसत्त्वे प्रमाणमत आह—**पुरुषे कर्तृत्वाभिमान इति,** भेदाग्रहात् बुध्दिपुरुषयोर्भेदाग्रहादित्यर्थः । संप्रति बुध्दितः उपलब्धेर्भेदसाधनार्थं बुद्धेरंशत्रयं दर्शयति—**ममेदमिति,** पुरुषोपरागः पुरुषसम्बन्धः, **तत्प्रतिविम्वादिति** तस्यां बुद्धौ प्रतिविम्बाद्धेतोरतात्त्विक इत्यर्थः, अतात्त्विकत्वे दृष्टान्तमाह—**दर्पणस्येति** दर्पणस्य यथा मुखसम्बन्धः प्रतिविम्बमात्रं, न तु तात्त्विकस्तथा बुद्धिपुरुषयोरेकत्वाभिमानात्पुरुषसम्बन्धोऽपि दर्पणाकारायां बुद्धौ पुरुषप्रतिविम्बोदयमात्रादेवेति न तात्त्विक इति भावः । **इदमितीति** विषयोपरागो विषयसम्बन्धः, इन्द्रियप्रणालिकयेन्द्रियद्वारेत्यर्थः, **परिणतिभेदः** अयं घट इत्यादि ज्ञानरूपः परिणाम एव घटादिविषयेण सम्बन्ध इत्यर्थः, स च तात्त्विकः । तात्त्विकत्वे दृष्टान्तमाह—**दर्पणस्येव मलिनिमा इति** यथा दर्पणे मलिनिम्नः सम्बन्धस्तात्त्विको भवत्येवं घटादौ बुध्दिसम्बन्धोऽपि तात्त्विक एवेत्यर्थः। **कर्तव्यमितीति। तेनांशेति** ममेदं कर्तव्यमिति बुध्द्यभिलापकशब्दे ममेत्यनेन च पुरुषसम्बन्धः इदमित्यनेन विषयसम्बन्धः कर्तव्यमित्यनेन च व्यापारसम्बन्धो बुध्धावभिलाप्यत इत्यंशत्रयवती बुध्दिरिति सिध्दमिति भावः । **तदिति** तस्या बुध्देः परिणामेनेत्यस्यैव विवरणं ज्ञानेन, पुरुषस्य

संवन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते। ज्ञानादिवत्सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः। न च बुद्धिश्चेतना, परिणामित्वादिति मतमपास्तं, कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च। चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशेऽपि भ्रम इति चेत्कृत्यंशेऽपि किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः। नन्व-

---

योऽतात्त्विकः सम्बन्धः स उपलब्धिरुच्यत इति योजना अतात्त्विकत्वे दृष्टान्तः दर्पणस्य मलिनिम्नेव मुखस्य सम्बन्ध इति। तथा च बुद्धिपरिणामेन ज्ञानेन पुरुषस्य योऽतात्त्विकः सम्बन्धः स उपलब्धिर्न तु बुद्धिरेवोपलब्धिरित्यभिप्रायः। **कृतिसामानाधिकरण्येनेति** यद्यपि धर्म्मादेः प्रत्यक्षत्वाभावेन प्रात्यक्षिकप्रतीत्यभिप्रायेण सामानाधिकरण्येन प्रतीतेरित्युक्तिर्विरुद्धेव प्रतिभाति, तथापि धार्म्मिकोऽहं करोमीत्यादिप्रतीतेर्धर्म्मादावप्युपनीतभानविषयत्वमस्त्येवेति बोध्यम्। ननु सुखदुःखेच्छादिवत् चैतन्यस्यापि सामानाधिकरण्यप्रतीतेश्चैतन्यमपि बुद्धेरेवास्त्वत आह—**नचेति** परिणामित्वादनित्यत्वादित्यर्थः। अनित्यत्वाद्बुद्धेश्चैतन्यं न सम्भवति, चेतनस्य अप्रच्युतानुत्पन्नस्थिरैकरूपस्यैव युक्तिसिद्धत्वादिति भावः। **इति मतमिति** प्रकृतिः कर्त्रीत्यारभ्य परिणामित्वादित्यन्तेन ग्रन्थेन प्रदर्शितं मतं वक्ष्यमाणयुक्त्याऽपास्तमित्यर्थः। **कृत्यदृष्टभोगानामिति। सामानाधिकरण्यप्रतीतेरिति** चेतनोऽहं करोमीति प्रतीत्या कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यसत्त्वादित्यर्थः। तद्भिन्ने कर्तृभिन्ने चेतने इति शेषः। ननु घटादिवज्जन्यत्वात्कर्तृत्वाश्रयो न चेतनः इत्युक्तत्वाच्चेतनोऽहं करोमीतिप्रतीतेश्चैतन्यांशे भ्रमत्वमित्याशङ्कते **चैतन्यांश इति**। उत्तरयति **कृत्यंशेऽपीति** ननु चेतने कर्तृत्वाश्रयत्वस्य प्रमाणबाधितत्वेन पूर्वोक्तयुक्त्या बुद्धौ कर्तृत्वस्य सिद्धत्वेन च चेतनोऽहं करोमीतिप्रतीतेश्चैतन्यांशे भ्रमत्वेऽपि न तस्याः कृत्यंशे भ्रमत्वमत आह—**अन्यथेति** कर्तृचेतनयोर्भेदाङ्गीकार इत्यर्थः। बुद्धिर्नित्याऽ-

चेतनायाः प्रकृतेः कार्यत्वाद्बुद्धेरचैतन्यं कार्यकारणयोस्तादात्म्यादिति चेन्न, असिद्धेः। कर्तुर्जन्यत्वे मानाभावात्। वीतरागजन्मादर्शनादनादित्वम्। अनादेर्नाशासंभवान्नित्यत्वम्। तत्किं प्रकृत्यादिकल्पनेन। न च—

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहंकारविमूढात्मा कर्ताहमिति मन्यते॥" गीता अ. ३ श्लो. २७

इत्यनेन विरोध इति वाच्यम्, प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैरिच्छादिभिः कर्ताहमेवेत्यस्य तदर्थत्वात्। "तत्रैवं सति कर्तारमात्मानं

---

नित्या वेति विकल्प्याद्ये दूषणमाह—**बुद्धेर्नित्यत्व** इति। मोक्षाभाव इति तत्र मतेनात्मना बुध्युपधानस्यैव संसारत्वादिति भावः। द्वितीये दूषणमाह—**तत्पूर्वमिति** बुद्ध्युत्पत्तिपूर्वमित्यर्थः। वस्तुतस्तूत्पत्तेः पूर्वं बुद्ध्याश्रितादृष्टादेरभावाद्बुद्धेर (रेवा) नुत्पत्त्या संसारः कदाचिदपि न स्यादिति बोध्यम्। **असिद्धेः** बुद्धौ प्रकृतिजन्यत्वासिद्धेरित्यर्थः। ननु कर्तृत्वेन जन्यानुमितौ परिशेषात्प्रकृतिजन्यत्वं सिध्यतीत्यत आह—**कर्तुर्जन्यत्व** इति। प्रत्युत कर्तुरनादित्वग्राहकतर्कसद्भावादनादित्वमेव कर्तुरित्याह—**वीतरागेति** न्यायसूत्रमिदं राग इच्छा वीतरागस्य रागशून्यस्य जन्मादर्शनात् रागविद्धस्यैव जन्मदर्शनादिति यावत्। **अनादित्वमिति** अयमर्थः—स्तन्यपानान्यथानुपपत्त्या सर्वोऽपि जंतू रागयुक्त एव जायते, रागश्च पूर्वानुभूतविषयस्मरणं विना न सम्भवति, पूर्वानुभवश्च जातमात्रस्यैहिको न सम्भवति, तस्मादगत्या जन्मान्तरीयानुभवो वाच्यः, तस्मादयमात्मा पूर्वशरीरानुभूतविषयान्स्मरन् तेषु रज्यते, एवं पूर्वपूर्वजन्मन्यपीति सिद्धमात्मनोऽनादित्वमिति। **अनादेरिति** भावस्येति शेषः। **प्रकृतेरिति** प्रकृतिर्मूलप्रकृतिस्तस्या गुणैः सत्त्वरजस्तमोभिः सर्वशः क्रियमाणानि कर्म्माणि भवन्ति तथाप्यहङ्कारेण सांख्यदर्शनप्रसिद्धेन विमूढ आत्मा अन्तःकरणं यस्य तथाविधः पुरुषः कर्ताहमिति मन्यते इत्यर्थकेन भगवद्वचनेनेत्यर्थः। तेनात्मनि कर्तृत्वाभाववोधनादिति भावः। **अहमेवेति** तथा च तेनात्मनि स्वतन्त्रकर्तृत्वस्याभावः

केवलं तु यः" इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति संक्षेपः। धर्माधर्माश्रय इति आत्मेत्यनुषज्यते। शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तेः। विशेषगुणयोगत इति। योग्यविशेषगुणस्य ज्ञानसुखादेः संबन्धेनात्मनः प्रत्यक्षत्वं संभवति न त्वन्यथा अहं जाने अहं करोमीत्यादिप्रतीतेः ४९

**प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः।**

**अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥**

अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते। प्रवृत्तिरत्र चेष्टा। ज्ञानेच्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वाच्चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्माऽनुमीयत इति भावः। अत्र दृष्टान्तमाह।

---

प्रतिपाद्यते, न तु कर्तृत्वसामान्याभाव इति भावः। **प्रकटीकृतोऽयमिति** **उपरिष्टादग्र इत्यर्थः।** "अधिष्ठानं तथा कर्ता करणं च पृथग्विधं। विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ १ ॥" इत्यनेन पञ्चानामपि कारणत्वं प्रतिपाद्य "तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १ ॥" इत्यादिना स्वतन्त्रकर्तृत्वस्यैवात्मनो निषिद्धत्वादिति भावः। संक्षेपः सांख्यमतविचारस्येति शेषः।

॥ इति **सांख्यमतखण्डनम्** ॥

धर्माधर्माश्रयः क इत्याकांक्षायामाह—**आत्मेत्यनुषज्यत इति।** ननु शरीरस्यैव धर्माधर्माश्रयत्वमस्त्वत आह—**शरीरस्येति, तदाश्रयत्वे** धर्माधर्माश्रयत्वे। **अन्यथा**योग्यविशेषगुणसम्बन्धं विना। **इत्यादिप्रतीतेरीति** ज्ञानादिसम्बन्धप्रकारेणैवात्मनः प्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः ॥ ४९ ॥

नन्वहं सुखीत्यादिप्रत्यक्षस्यैवात्मनि प्रमाणसम्भवात्प्रवृत्त्याद्यनुमेयोऽयमिति मूलमपार्थकमत आह—**परदेहादाविति।** परकीयप्रवृत्त्यादेरतीन्द्रियत्वेन हेतुज्ञानासम्भवादाह—**प्रवृत्तिरत्रेति।** उक्तप्रायत्वात् शरीरस्य न चैतन्यमित्यनेनोक्तत्वादित्यर्थः। **अनुमीयत इति** परकीयशरीरं चेतनाधिष्ठितं चेष्टावत्त्वा-

रथेति । यद्यपि रथकर्म चेष्टा न भवति । तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्मापीति भावः ॥ अहंकारस्येति । अहंकारोऽहमिति प्रत्ययस्तस्याश्रयो विषयः आत्मा न शरीरादिरिति । मन इति । मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः । रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥ ५० ॥

**विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तु द्विविधा मता ।**
**अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥**

विभुत्वं परममहत्परिमाणवत्त्वम् । तच्च पूर्वोक्तमपि स्पष्टार्थमुक्तम् । बुद्ध्यादीति । बुद्धिसुखदुःखेच्छादयश्चतुर्दशगुणाः पूर्वोक्ता वेदितव्याः । अत्रैव प्रसङ्गाद्बुद्धेः कतिपयं प्रपञ्चं दर्शयति । बुद्धिस्त्विति । द्वैविध्यं व्युत्पादयति । अनुभूतिरिति । अनुभूतिश्चतुर्विधेति । एतासां चतसृणां करणानि चत्वारि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रोक्तानि वेदितव्यानि ॥ ५१ ॥

**प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।**

---

दित्येवमनुमीयत इत्यर्थः । दृष्टान्ते रथे चेष्टावत्त्वहेतोरसिद्धिमाशंक्य चेष्टापदस्य विजातीयक्रियार्थकतां द्योतयति—**यद्यपीति** तथा च शरीरमिदं चेतनाधिष्ठितं विजातीयक्रियावत्त्वाद्रथवदित्येवं परात्मानुमीयत इति भावः । मात्रपदस्यार्थमाह **मनोभिन्नेन्द्रियेति**।मनोमात्रविषयत्वे हेतुमाह—**रूपाद्यभावेनेति** ॥ ५० ॥

तच्च परममहत्परिमाणवत्त्वं च **पूर्वमुक्तमपीति** "कालखात्मदिशां सर्वगतत्वं परमं महदि" त्यनेन पूर्वमुक्तमपीत्यर्थः । **पूर्वोक्ता** इति, "बुद्ध्यादिषट्कं सङ्ख्यादिपञ्चकं भावना तथा । धर्म्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्दश ॥" इत्यनेन पूर्वमुक्ता इत्यर्थः ।

॥ इत्यात्मनिरूपणम् ॥

आत्मनिरूपणानन्तरं बुद्धिनिरूपणे बीजमाह—**अत्रैव प्रसङ्गादिति** एतासां प्रत्यक्षानुमित्युपमितिशाब्दबुद्धीनामित्यर्थः ॥ ५१ ॥

**घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥५२॥**

इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम्। ईश्वरप्रत्यक्षं तु न लक्ष्यम्। इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति सूत्रे

---

उद्दिष्टासु प्रथमोपस्थितत्वात्प्रत्यक्षं लक्षयति—**इन्द्रियजन्यमिति** इन्द्रियरूपादावपीन्द्रियजन्यत्वमस्तीत्यतो ज्ञानमिति। अनुमित्यादावतिव्याप्तिवारणायेन्द्रियजन्यमिति। इन्द्रियजन्यत्वप्रवेशेऽप्यनुमित्यादावतिव्याप्तिस्तदवस्थैवेत्याशङ्कते—**यद्यपीति, इन्द्रियत्वेनेति** इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यताशालि ज्ञानं प्रत्यक्षमित्यर्थः। तथा चानुमित्यादीनां नेन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यताशालित्वमस्ति, लाघवेन मनसस्तत्र मनस्त्वेनैव कारणत्वात्, अतो नातिव्याप्तिरितिभावः। अत्र लक्षणे ज्ञानमिति स्वरूपकथनमात्रं, इन्द्रियरूपादीनामिन्द्रियत्वेनेन्द्रियजन्यत्वाभावादेव वारणसम्भवादिति बोध्यम्। नन्वेतादृशलक्षणमीश्वरप्रत्यक्षेऽव्याप्तं, ईश्वरप्रत्यक्षस्य नित्यत्वेनेन्द्रियजन्यत्वाभावादत आह—**ईश्वरप्रत्यक्षं त्विति। इन्द्रियार्थसन्निकर्षोत्पन्नमिति** इन्द्रियार्थसन्निकर्षोत्पन्नम**व्यभिचारि** भ्रमभिन्नं ज्ञानं प्रत्यक्षं तद् द्विविध**मव्यपदेश्यं** निर्विकल्पकं **व्यवसायात्मकं** सविकल्पकं चेत्यर्थः। यद्वा इन्द्रियार्थसन्निकर्षोत्पन्न**मव्यपदेश्य**मशाब्दं **अव्यभिचारि** भ्रमभिन्नं **व्यवसायात्मकं** सविकल्पकं ज्ञानं प्रत्यक्षमित्यर्थो बोध्यः। अत्राव्यपदेश्यमिति कथनेन शब्दार्थयोस्तादात्म्याद्घटादौ ज्ञाते घटादिशब्दोऽपि ज्ञात एवेति घटादिपदार्थवत् घटादिशब्देनापि व्यपदिश्यमानत्वात्सर्वमेव ज्ञानं शाब्दं प्राप्नोतीति निरस्तं बोद्धव्यं। तथा चाव्यपदेश्यमित्यस्य शक्तिज्ञानसहकृतपदज्ञानं विना यद् ज्ञानं तच्छाब्दं नेत्यर्थो बोध्यः। वस्तुतस्तु शाब्दज्ञानस्यापि शब्दजन्यत्वेनैव शाब्दत्वं, न तु शब्दविषयत्वेनेत्यादिकं भाष्यादाववसेयमिति दिक्। अव्यभिचारीतिकथनेन च प्रत्यक्षभ्रमेऽतिव्या-

तथैवोक्तत्वात्। अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। (अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य करणत्वात्तत्र तत्र नातिव्याप्तिः)। इदं लक्षणमीश्वरप्रत्यक्षसाधारणम्। परामर्शजन्यं ज्ञानमनुमितिः यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः। न च कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्, तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः। एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः।

---

प्तिर्निरस्ता, तथा च सूत्रे प्रत्यक्षप्रमाया लक्षणमुक्तमिति पूर्वोक्तलक्षणे ज्ञानपदमपि प्रमाबोधनार्थमेवेति बोध्यम्। व्यवसायात्मकमितिकथनेन निर्विकल्पकनिरासः। **सूत्रे** गौतमसूत्रे। **तथैवोक्तत्वादिति** ईश्वरप्रत्यक्षालक्ष्यत्वस्यैवाभिप्रेतत्वादित्यर्थः। ईश्वरप्रत्यक्षस्यापि लक्ष्यत्वाभिप्रायेणाह—**अथवेति**। **ज्ञानाकरणकमिति** तथा चेश्वरज्ञानस्य नित्यत्वेन ज्ञानकरणकत्वाभावात्तत्रापि लक्षणसमन्वयः। अनुमितिं लक्षयति—**परामर्शजन्यमिति**। **यद्यपीति परामर्शप्रत्यक्षादिकमितीति** वह्निव्याप्यधूमवान् पर्वत इति ज्ञानवानहमित्यादिकमित्यर्थः। आदिपदेन वह्निव्याप्यधूमवत्पर्वतवानयं देश इत्यादेर्विशिष्टवैशिष्ट्यावगाहिबोधस्य परिग्रहः। **परामर्शजन्यमिति** विषयविधया विशिष्टज्ञानत्वेन च परामर्शस्य तत्र हेतुत्वादिति भावः। **हेत्वविषयकमिति** तथा च परामर्शप्रत्यक्षादेर्हेत्वविषयकत्वाभावान्न तत्रातिव्याप्तिरिति भावः। **कादाचित्केति** धूमवान्पर्वतो वह्निमानित्याद्यनुमितौ पक्षतावच्छेदकविधया हेतोर्धूमस्य भानाद्धेत्वविषयकत्वाभावेनाव्याप्तेरिति भावः। **तादृशेति** परामर्शजन्यहेत्वविषयकेत्यर्थः। सत्तामादाय प्रत्यक्षादिष्वतिव्याप्तिवारणायानुभवत्वव्याप्येति। अत्रानुभवत्वव्याप्यत्वमनुभवन्यूनवृत्तित्वरूपं बोध्यमन्यथानुभवत्वव्याप्यानुभवत्वमादाय प्रत्यक्षादावतिव्याप्तेर्दुर्निवारत्वं स्यात्। लाघवादाह—**अथवेति, व्याप्तीति** व्याप्तिज्ञानं करणं यस्य तद्व्याप्तिज्ञानकरणकमेवमग्रेऽपि।

पदज्ञानकरणकं ज्ञानं शाब्दबोधः । वस्तुतो यां कांचिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम् । एवं यत्किंचित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति । जन्यप्रत्यक्षं विभजते—घ्राणजादीति । घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम् । न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम्, जन्यप्रत्यक्षस्यैव निरूपणीयत्वादुक्तसूत्रानुसारात् ॥ ५२ ॥

**घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।**
**तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥५३॥**

गोचर इति ग्राह्य इत्यर्थः । गन्धत्वादिरिति । आदिपदात् सुरभित्वादिपरिग्रहः । गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा ।

---

एतल्लक्षणे साध्यादिभेदेन व्याप्तिज्ञानादेर्भेदादेकव्याप्युपादाने अन्यानुमितावव्याप्त्यापत्तेर्यत्किंचिद्व्याप्तिव्यक्तिमादाय तज्ज्ञानकरणकानुभवत्वव्याप्यजातिमत्त्वविवक्षणेन पूर्वोक्ताव्याप्तिवारणेऽप्यनुमित्यादिकं प्रति व्याप्तिज्ञानादेर्न व्याप्तिज्ञानत्वादिना करणत्वं, किं तु ज्ञानत्वेनैव मनस्त्वेनैव वेति केषांचिन्मतेऽसम्भवस्य दुर्वारत्वमेवेत्यत सर्वमतसाधारण्येनाह—**वस्तुत इति** । नन्वनुमित्यादिकं प्रति मनसः करणत्वपक्षे ज्ञानाकरणकत्वं प्रत्यक्षलक्षणमनुमित्यादावतिव्याप्तमत आह—**एवमिति** । **प्रत्यक्षत्वादिकमिति** यां कांचिदुपमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमुपमितित्वम् । एवं यां कांचिच्छाब्दबोधव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमिति बोध्यमित्यर्थः । **उक्तसूत्रेति** इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमित्युपदर्शितसूत्रानुसारादित्यर्थः ॥ ५२ ॥

ननु गोचरपदस्य विषयार्थकतया घ्राणस्य गोचरो गन्ध इत्यसङ्गतमत आह—**ग्राह्य इति** । सुरभित्वादीत्यादिनाऽसुरभित्वपरिग्रहः । रसत्वादीत्यादिना मधुरत्वादेः परिग्रहः ॥ ५३ ॥

गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम्। तथा रस इति। रसत्वादिसहित इत्यर्थः। तथा शब्दोऽपि शब्दत्वादिसहितः। गन्धो रसश्च उद्भूतो बोध्यः ॥ ५३ ॥

उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।
विभागसंयोगपरापरत्व-
स्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥

ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत्प्रत्यक्षम्। तद्वन्ति उद्भूत-रूपवन्ति ॥ ५४ ॥

क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ॥
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥ ५५ ॥

योग्येति। पृथक्त्वादिकमपि योग्यवृत्तितया बोध्यम्। तादृशः योग्यव्यक्तिवृत्तिरित्यर्थः। चक्षुर्योग्यत्वमेव कथं तदाह—गृह्णातीति। आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम्। तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसंबन्धेन कारणत्वम्। द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेनेति ॥ ५५ ॥

उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥

द्रव्याध्यक्षे—

---

न तत्प्रत्यक्षं नोष्मादिगतरूपप्रत्यक्षमित्यर्थः। न्यूनतां परिहरति पृथक्त्वादिकमपीति। तयोरुद्भूतरूपालोकसंयोगयोः ॥ ९४ ॥ ९९ ॥

उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः। सोऽपि उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः। रूपान्यदिति। रूपभिन्नं रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम्। तथाच पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रियाजातयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इत्यर्थः। अत्रापि त्वागिन्द्रियजन्येऽपि रूपं द्रव्यप्रत्यक्षे कारणम्। तथाच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्। नवीनास्तु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपं कारणं प्रमाणाभावात्। किंतु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणमन्वयव्यतिरेकात्। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेन्न किंचित्। आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु। रूपस्य कारणत्वे लाघवमिति चेन्न, वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात्। इष्टापत्तिरिति चेदुद्भूतस्पर्श एव लाघवात्कारणमस्तु। प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किं नेष्यते। तस्मात् प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्य संभवाद्वायोरपि प्रत्यक्षं संभवत्येव। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपस्य

---

रूपभिन्नस्य रूपत्वादेरपि त्वगिन्द्रियेणाग्रहणादाह—**रूपत्वादिभिन्नमिति,** आदिना शुक्लत्वादिपरिग्रहः। नन्वेवं बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षाभावं प्रति रूपाभावस्पर्शाभावयोरुभयोरेव प्रयोजकत्वं वाच्यं तदपेक्षया बहिरिन्द्रियजन्यप्रत्यक्षं प्रति रूपस्य कारणत्वं परिकल्प्यैकस्य तदभावस्य प्रयोजकत्वकल्पने लाघवमित्यत आह—**आत्मावृत्तीति** आत्मनि अवृत्तिः शब्दभिन्नो यो विशेषगुणस्तद्वत्त्वमित्यर्थः। **लाघवादिति** यथा भवता लाघवाद्बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे उद्भूतरूपस्य कारणत्वं कल्प्यते तथोद्भूतस्पर्शस्यैव कारणत्वं स्यादित्यर्थः। नन्वेवं प्रभायाः प्रत्यक्षत्वं न स्यात्तत्रोद्भूतस्पर्शाभावादत आह—**प्रभाया इति**, तथा च यथा उद्भूतरूपस्य कारणत्ववादिमते वायोरप्रत्यक्षे इष्टापत्तिर्दीयते तथा मम मते प्रभाया अप्रत्यक्षे एवेष्टापत्तिः स्यादिति भावः। उपसंहरति—**तस्मादिति**। ननु वायोः प्रत्यक्षत्वे वायु-

न वा स्पर्शस्य हेतुत्वम् । वायुप्रभयोरेकत्वं गृह्यत एव, क्वचिद्द्वित्वादिकमपि, क्वचित्संख्यापरिमाणाग्रहो दोषादित्याहुः ॥ ५६ ॥

**त्वचो योगो मनसा ज्ञानकारणम् ।**

त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः । किं तत्र प्रमाणं, सुषुप्तिकाले त्वचं त्यक्त्वा पुरीततिवर्तमानेन मनसा ज्ञानाजननमिति । ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा । नाद्यः अनुभवसामग्र्यभावात् । तथाहि । प्रत्यक्षे चक्षुरादिना मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम् । ज्ञानादेरभावादेव न मानसं प्रत्यक्षम् । ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्षमिति । एवं व्याप्तिज्ञानाभावादेव नानुमितिः । सादृश्यज्ञानाभावान्नोपमितिः । पदज्ञानाभावान्न शाब्दबोधः । इत्यनुभवसामग्र्यभावान्नानुभवः । उद्बोधकाभावाच्च न स्मरणम् । मैवम् । सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्संबन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात् । तदतीन्द्रियत्वे मानाभावात् । सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायत इत्यत्रापि प्रमाणाभावात् । अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात् । विषयत्वक्संयोगस्य त्वङ्मनःसंयोग-

---

गतसङ्ख्यापरिमाणयोरपि प्रत्यक्षत्वं स्यादत आह—**वायुप्रभयोरिति** । **गृह्यत एवेति,** तथा च वायुगतसङ्ख्यादिग्रहे इष्टापत्त्या वायोः स्पार्शनाङ्गीकारे बाधकाभाव इति भावः **दोषा**त्सजातीयसंवलनादिरूपदोषादित्यर्थः ॥ ५६ ॥

**ज्ञानसामान्ये** जन्यज्ञानसामान्य इत्यर्थः । **तत्रेति** जन्यज्ञानसामान्यं प्रति त्वङ्मनःसंयोगस्य कारणत्व इत्यर्थः । **इच्छादिव्यक्तेरिति** इच्छाया आदिव्यक्तिरिति व्युत्पत्त्या ज्ञानमात्रं गृह्यते । ननु सुषुप्तिप्राक्कालीनज्ञानस्यातीन्द्रियत्वेन न सुषुप्तिकाले ज्ञानादेः प्रत्यक्षत्वापत्तिरत आह—**तदतीन्द्रियत्वे इति** सुषुप्तिप्राक्कालीनज्ञानस्यातीन्द्रियत्वे इत्यर्थः । ननु सुषुप्तिप्राक्कालीनज्ञानस्य निर्विकल्पकत्वेनातीन्द्रियत्वं सिद्धमेवेत्यत आह—**सुषुप्तिप्राक्काल इति** । **अनुभवानुरोधादिति,**

स्य च सत्त्वात् । परस्परप्रतिबन्धादेकमपि वा न स्यादिति । अत्र केचित्पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्यत इति । अन्ये तु सुषुप्त्यनुरोधाच्चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यते । चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति ॥

**मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ५७॥**

मनोग्राह्यमिति । मनोजन्यप्रत्यक्षविषयमित्यर्थः । मतिर्ज्ञानम् । कृतिः प्रयत्नः । एवं सुखत्वादिकमपि मनोग्राह्यम् । एवमात्मापि मनोग्राह्यः किंतु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ५७॥

**ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।**
**महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥५८॥**

चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न संभवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात् । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । तथाच प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव

---

तथा चानुभव एव तत्तज्ज्ञानसामग्र्यास्तत्तज्ज्ञानप्रतिबन्धकत्वे प्रमाणमिति भावः । मिश्रमतं दर्शयति—**अन्ये त्विति** सुषुप्त्यनुरोधेन सुषुप्तौ ज्ञानानुत्पादानुरोधेन, एवं च चाक्षुषादिकाले पूर्वोक्तस्पार्शनापत्तिर्न सम्भवतीत्याह—**चाक्षुषादीति** । मनोग्राह्यत्वस्य सर्वत्रैव सत्त्वादाह—**मनोजन्येति**मनोमात्रजन्येत्यर्थः ॥ ५७ ॥

निर्विकल्पके प्रमाणं दर्शयति—**चक्षुःसंयोगादीति** । **विशेषणज्ञानस्य कारणत्वादिति** दण्डी पुरुष इत्यादौ विशेषणज्ञानस्य कारणत्वावधारणादिति भावः। ननु रक्तो दण्ड इति ज्ञानं विना रक्तदण्डवानिति ज्ञानानुदयेन विशिष्टवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वं भवतु नाम, तथापि विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वे मानाभाव इति चेन्न, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाभावे घटत्वजातिमानिति प्रतीतिकालेऽपि घट इति प्रत्यक्षोत्पत्तेर्दुर्वारत्वं स्यादतस्तत्स्वीकारादिति दिक् । **वैशिष्ट्यानवगाह्य**

ज्ञानं जायते। तदेव निर्विकल्पकम्। तच्च न प्रत्यक्षम्। तथाहि। वैशिष्ट्यानवगाहि ज्ञानस्य प्रत्यक्षं न भवति घटमहं जानामीति प्रत्ययात्। तत्रात्मनि ज्ञानं प्रकारीभूय भासते। ज्ञाने घटस्तत्र घटत्वम् यः प्रकारः स एव विशेषणमित्युच्यते। विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्। निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति, घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न संभवति॥ जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात्। महत्त्वमिति। द्रव्यप्रत्यक्षे

---

वेति वैशिष्ट्यनिष्ठसांसर्गिकविषयताशून्यमेवेत्यर्थः। तथा च निर्विकल्पकस्य त्रिविधविषयताशून्यत्वेन तुरीयाख्यविषयतावत्त्वमेवेति सिद्धान्तो बोध्यः। अनवगाह्येवेत्येवकारेण कल्पनीयविशेषणज्ञानस्य वैशिष्ट्यावगाहित्वे तस्यापि विशिष्टबुद्धित्वेन विशेषणज्ञानसापेक्षतयेत्येवमग्रेऽपीत्यनवस्थापत्ति. स्यादतः प्रथमं विशेषणज्ञानं वैशिष्ट्यानवगाह्येवेति सूचितम्। **तदेव** तादृशविषयताशून्यज्ञानमेव निर्विकल्पकं निर्विकल्पकस्वरूपमित्यर्थः। **तच्चेति** निर्विकल्पकं च। निर्विकल्पकस्यातीन्द्रियत्वमेव साधयति—**तथाहीत्यादिना**। **इति प्रत्ययादिति** घटज्ञानस्य प्रत्यक्षं घटमहं जानामीत्येतदेव सम्भवति, तच्च न निर्विकल्पकं विषयीकरोतीतिभावः। एतदेव स्पष्टयति **तत्रात्मनीत्यादिना**, तत्र घटमहं जानामीतिप्रत्यये। **न सम्भवतीति** अयमाशयः—ज्ञानस्य प्रत्यक्षं घटमहं जानामीत्यादिस्वरूपमेव सम्भवतीत्यनुभवसिद्धं, एतच्च विशिष्टवैशिष्ट्यावगाहिस्वरूपमतोऽयं घट इत्यादिविशिष्टज्ञानोत्तरमेव स्योत्पत्तिः स्वीकर्तव्या, विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यावगाहिज्ञानकारणत्वादिति। ननु घटमहं जानामीति ज्ञाने न घटत्वविशिष्टघटस्य वैशिष्ट्यं भासते, किंतु शुद्धघटस्यैवेत्यत आह—**घटत्वाद्यप्रकारकं चेति**। मूले महत्त्वं षड्विध इति, अत्र यद्यपि श्रावणादौ महत्त्वस्य कारणत्वास्वीकारेऽपि न किमपि

महत्त्वं समवायसंबन्धेन कारणं। द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसंबन्धेन कारणं, द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेन कारणमिति। इन्द्रियमिति। अत्रापि षड्विध इत्यनुषज्यते। इन्द्रियत्वं तु न जातिः पृथिवीत्वादिना सांकर्यप्रसङ्गात्। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्। आत्मादिवारणाय सत्यन्तम्। उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति। विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति। उद्भूतत्वं न जातिः शुक्लत्वादिना सांकर्यात् न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपत्वादिना चाक्षुषादौ जनकतानुपपत्तेः। किंतु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूतत्वम्। तच्च संयोगादावप्यस्ति तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरप्यस्त्यतो विशेषेति।

---

दूषणमुत्पश्यामस्तथाऽपि लाघवेन द्रव्यसमवेतप्रत्यक्षत्वावच्छिन्नं प्रत्येव महत्त्वस्य कारणत्वमित्यतो षड्विध इत्युक्तमिति बोध्यम्। **आत्मादीति** आत्मादौ याऽतिव्याप्तिस्तद्वारणायेत्यर्थः। शब्देतरेत्यादिलक्षणे प्रविष्टस्य विशेषपदस्य प्रयोजनं दर्शयितुं भूमिकां रचयति **उद्भूतत्वमिति**। **साङ्कर्यादिति** उद्भूतत्वं विहाय शुक्लत्वमनुद्भूतशुक्ले, शुक्लत्वं विहायोद्भूतत्वं च नीलोद्भूते, उभयोः समावेशः शुक्लोद्भूत इत्येवं साङ्कर्यसत्वादुद्भूतत्वं न जातिरित्यर्थः। **नानैवोद्भूतत्वमिति** तथा च शुक्लत्वव्याप्योद्भूतत्वस्य नीलोद्भूतादावसत्त्वेन न साङ्कर्यमिति भावः। **जनकत्वानुपपत्तेरिति** एकैकस्य कारणतावच्छेदकत्वे व्यभिचारात्कूटस्य चैकत्वासम्भवादिति भावः। **तदभावकूटश्चोद्भूतत्वमिति** तथा च तादृशकूटस्य कारणतावच्छेदकत्वमिति नोक्तदोष इति भावः। दूरस्थवृक्षादेः प्रत्यक्षत्वेऽपि तद्वर्तिकोटरादेः प्रत्यक्षत्वं न भवतीत्यतः इन्द्रियावयवविषयावयवयोः संयोगस्यापि प्रत्यक्षे कारणत्वमस्तीत्यभिप्रायवतां प्राचां मते इन्द्रियलक्षणप्रविष्टस्य मनःपदस्य कृत्यमाह—

कालादिवारणाय विशेष्यदलम् । इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय, नवीनमते कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेश्च वारणाय मनःपदम् । ज्ञानकारणमित्यपि तद्वारणाय । करणमिति। असाधारणं कारणं करणम् । असाधारणत्वं व्यापारवत्त्वम् ॥ ५८ ॥

विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः । ॥ ५९ ॥
द्रव्येषु समवेतानां तथा तत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥

व्यापारः संनिकर्षः । षड्विधं संनिकर्षमुदाहरणद्वारा दर्शयति ।

---

**इन्द्रियावयवविषयसंयोगस्यापीति** इन्द्रियावयववारणायेति मनःपदमित्यनेनान्वितं, तथा चेन्द्रियावयवेष्वतिव्याप्तिवारणाय मनःपदमिति भावः। दूरत्वस्य प्रतिबन्धकत्वेनैव तत्र कोटरादेः प्रत्यक्षत्वापत्तिवारणसम्भवान्नेन्द्रियावयवविषयावयवयोः संयोगस्य प्रत्यक्षं प्रति कारणत्वमस्तीत्यभिप्रायवतां नवीनानां मतेऽपि मनःपदस्य कृत्यमाह—**नवीनमत इति। सन्निकर्षघटकतयेति** चक्षुःसंयुक्तविशेषणतारूपसन्निकर्षघटकतयेत्यर्थः । **तद्वारणाय** कालादावतिव्याप्तिवारणाय॥ ५८ ॥

ननु तज्जन्यत्वे सति तज्जन्यजनकरूपस्य व्यापारस्य श्रोत्रशब्दसम्बन्धे समवायेऽसत्त्वाद्विषयेन्द्रियसम्बन्धो व्यापार इति मूलमयुक्तमत आह—**व्यापारः**

द्रव्यग्रह इति। द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम्। द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम्। एवमग्रेऽपि। वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणं द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणं द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः। एवमन्यत्रापि विशिष्यैव कार्यकारणभावः। परंतु पृथिवीपरमाणुनीले नीलत्वं पृथिवीत्वं च चक्षुषा कथं न गृह्यते तत्र परंपरयोद्भूतरूपसंबन्धस्य महत्त्वसंबन्धस्य च सत्त्वात्। तथाहि—नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते। तथाच महत्त्वसंबन्धो घटनीलमादाय वर्तते। उद्भूतरूपसंबन्धस्तूभयमादायैव वर्तते। एवं पृथिवी-

---

सन्निकर्ष इति। द्रव्यप्रत्यक्षमिति द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमित्यर्थः। इन्द्रियसंयोगजन्यमिति अयमाशयः—षड्विधप्रत्यक्षं प्रतीन्द्रियाणां करणत्वमुक्तं, तच्च व्यधिकरणानां न सम्भवतीत्यतस्तयोः सामानाधिकरण्यमेव दर्शयति—द्रव्यप्रत्यक्षमित्यादिना तथा च लौकिकविषयतासम्बन्धेन द्रव्ये जायमानं प्रत्यक्षं प्रति इन्द्रियाणां संयोगसम्बन्धेन कारणत्वं, एवमग्रेऽपि द्रव्यसमवेते रूपादौ जायमानं लौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति इन्द्रियाणां संयुक्तसमवायसम्बन्धेन कारणत्वं, एवमग्रेऽपि बोध्यम्। ननु द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षत्वेन हेतुत्वेऽन्धकारे घटचक्षुःसंयोगात्स्पार्शनापत्तिः स्यादत आह—वस्तुतस्त्विति। विशिष्यैवेत्येवकारेण सामान्यरूपेण कार्यकारणभावव्युदासः। नन्वेवं चक्षुःसंयुक्तसमवेतसमवायसम्बन्धेनैव पटादेरपि चाक्षुषत्वसम्भवाच्चक्षुःसंयोगस्य तत्संयुक्तसमवायस्य च प्रत्यासत्तित्वकल्पनमयुक्तमत आह—परंत्विति तत्र पृथिवीपरमाणुनीलवृत्तिनीलत्वे पृथिवीपरमाणुवृत्तिपृथिवीत्वे च परम्परया स्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेनेत्यर्थः। तदेव घटयति—तथाहीत्यादिना। घटनीलमादायेति स्वं महत्त्वं तदाश्रयो घटस्तत्समवेतं नीलं तत्समवेतत्वं परमाणुनीलवृत्तिनीलत्वेऽप्यस्त्येव नीलत्वस्यैकत्वादित्यर्थः। उभयमादायैवेति घटमादाय परमाणुमादाय वा। शुक्लत्वादि-

परमाणौ पृथिवीत्वेऽपि घटादिकमादाय महत्त्वसंबन्धो बोध्यः । एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम् ।

इत्थं च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् । एवं वाय्वादौ न सत्तादिचाक्षुषं तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् । एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् । एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्व-

---

व्याप्यानामनेकासामनुद्भूतत्वजातीनां परमाणुनीलादिवृत्तित्वे मानाभावेन परमाणुरूपादावप्युद्भूतत्वस्य स्वीकारात्परमाणुरूपस्यापि स्वपदेन धर्तुं शक्यत्वादिति भावः। **उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्येति** उद्भूतरूपावच्छिन्नत्वं महत्त्वावच्छिन्नत्वं च चक्षुःसंयुक्तैकदेशेन चक्षुःसंयोगेनान्वितं बोध्यम् । एवमग्रेऽपि । **तादृशेति** उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्येत्यर्थः । तथा च महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य त्रसरेणौ तद्रूपे चाभावात्तच्चाक्षुषानुपपत्त्या संयोगस्य संयुक्तसमवायस्य च प्रत्यासत्तित्वकल्पनमिति भावः । परमाणुनीलादौ नीलत्वादेश्चाक्षुषत्वापत्तेर्वारणं स्पष्टयति—**इत्थमित्यादिना** । प्रसङ्गादाह—**एवं यत्रेति** तथा चोद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगस्य द्रव्यचाक्षुषे, उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतरूपादिचाक्षुषे, उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य च द्रव्यसमवेतसमवेतरूपत्वादिचाक्षुषे कारणत्वमिति तत्त्वं पर्य्यवसिस्यतं । स्पार्शनप्रत्यक्षे त्वक्संयोगस्य कारणत्वं प्रपंचयति—**एव-**

क्संयुक्तसमवायः, द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् । अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव बोध्यम् । एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः । गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम् । एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः कारणम् । शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र सर्वं प्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकं प्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति । एवमात्मनः प्रत्यक्षे मनःसंयोगः, आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः । कारणम् । अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसंबद्धवि-

---

मित्यादिना । अत्रापि त्वाचप्रत्यक्षेऽपि । **पूर्ववदेवेति** चाक्षुषवदेवेत्यर्थः । तथाहि—प्राचीनमते बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रं प्रत्युद्भूतरूपस्य कारणत्वादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयोगो द्रव्यस्पार्शनप्रत्यक्षे कारणं। द्रव्यसमवेतानां स्पर्शादीनां स्पार्शनप्रत्यक्षे महत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयुक्तसमवायः, द्रव्यसमवेतसमवेतानां स्पर्शत्वादीनां स्पार्शने तादृशत्वक्संयुक्तसमवेतसमवायः कारणमिति । अत्र प्रभायाः स्पार्शनापत्तिवारणाय प्रथमकल्पे उद्भूतस्पर्शावच्छिन्नत्वनिवेशः । प्रभायां सत्तायाः स्पार्शनापत्तिवारणाय प्रभाघटितसन्निकर्षेण स्पर्शत्वस्पार्शनवारणाय च द्वितीयतृतीयकल्पयोस्तन्निवेश इति बोध्यम् । नवीनानां मते तु प्रथमकल्पेऽपि उद्भूतरूपावच्छिन्नत्वं न देयं, वायोरपि तन्मते प्रत्यक्षत्वात् । **घ्राणसंयुक्तसमवाय इति** अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतगन्धावच्छिन्नत्वं च देयं । एवं रासनप्रत्यक्षे महत्त्वावच्छिन्नत्वमुद्भूतरसावच्छिन्नत्वं च सन्निकर्षघटकीभूतरसनासंयोगे विशेषणं देयम् । **श्रोत्रावच्छिन्नेति** सकलपुरुषाणां सर्वशब्दप्रत्यक्षापत्तिरतः श्रो-

शेषणता हेतुः। वैशेषिकमते तु समवायो न प्रत्यक्षः। अत्र यद्यपि विशेषणता नानाविधा। यथाहि भूतलादौ घटाद्यभावः संयुक्तविशेषणतया गृह्यते। संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया। शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया। कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया। एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यम्। तथापि विशेषणतात्वरूपेणैकैव सा गण्यते। अन्यथा षोढा संनिकर्ष इति प्राचां प्रवादो व्याहन्येतेति। यदि स्यादुपलभ्येतेति। अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम्। तथाहि। भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते। तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम्। तत्र योग्यताप्यपेक्षिता सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा। तदर्थश्च प्रतियोगिनो

---

त्रावच्छिन्नेति। **समवायो न प्रत्यक्ष इति** सम्बन्धप्रत्यक्षे यावत्सम्बन्धिप्रत्यक्षस्य कारणत्वादिति भावः। अत्र यद्यपि विशेषणता नानाविधेत्यस्य तथापि विशेषणतात्वेनैकैव सा गण्यत इत्यग्रेणान्वयो बोध्यः। अभावप्रत्यक्षे इन्द्रियाणां न करणत्वं, किं तु योग्यानुपलब्धिरेव करणमिति भट्टानामाक्षेपं दूषयितुं मूले यदि स्यादिति। तथा चेन्द्रियाणामभावप्रत्यक्षे जननीये योग्यानुपलब्धेः सहकारिकारणमात्रतयैव निर्वाहेऽतिरिक्तप्रमाणकल्पनमनुचितमिति भावः। योग्यानुपलब्धेरभावप्रत्यक्षे सहकारित्वे युक्तिमाह—**तथाहीति घटादिज्ञाने** घटादिभ्रमे। अभावोपलम्भे तदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतदभावलौकिकप्रत्यक्षे प्रतियोग्युपलम्भाभाव इति तदिन्द्रियजन्यानाहार्यतत्संसर्गकतत्प्रकारकोपलम्भाभाव इत्यर्थः। **तत्र** प्रतियोग्युपलम्भाभावे। मणिकृतमतानुसारेण योग्यतां निर्वक्ति—**सा चेति। प्रतियोगिसत्त्वेति** प्रतियोगिसत्त्वप्रसंजनेन प्रतियो-

घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः । तथाहि । यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते । तत्र घटाभावादिप्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते । तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । वायौ रूपाभावः । पाषाणे सौरभाभावः । गुडे तिक्ताभावः । श्रोत्रे शब्दाभावः । आत्मनि सुखाभावः । एवमादयस्तत्तादिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् । संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता । अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता । अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ॥ ५९ ॥ ६० ॥ ६१ ॥ ॥ ६२ ॥

एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम् । तत्र लौकिक-

---

गिसत्त्वापादनेन प्रसञ्जित आपादितः प्रतियोगी यस्यैवंभूत उपलंभाभावोऽभावप्रत्यक्षे कारणमित्यर्थः । एतदेव स्पष्टयति—**तथाहीत्यादिना** । **वायावु-द्भूतरूपाभाव इति** रूपत्वावच्छिन्नाभावस्यातीन्द्रियानुद्भूतरूपप्रतियोगिकत्वेन प्रत्यक्षासम्भवादुद्भूतेति । **संसार्गाभावप्रत्यक्षे प्रतियोगिनो योग्यतेति** योग्यमात्रप्रतियोगिताकत्वं संसर्गाभावप्रत्यक्षे प्रयोजकमित्यर्थः, तथा च यस्य यावती ग्रहणसामग्री तं विहाय तस्यां सत्यां तत्संसर्गाभावस्तथैव गृह्यत इति भावः । स्तम्भादौ पिशाचभेदस्य प्रत्यक्षत्वादाह—**अन्योन्याभावप्रत्यक्षे इति** । **अधिकरणयोग्यतेति** योग्याधिकरणवृत्तित्वमन्योन्याभावप्रत्यक्षप्रयोजकमित्यर्थः । स्तम्भो यदि पिशाचः स्यात्तदा स्तम्भात्मकतयोपलभ्येतेति न पिशाचानुपलम्भः स्यादित्यापादयितुं शक्यत्वादयोग्यप्रतियोगिकस्याप्यन्योन्याभावस्य प्रत्यक्षत्वमिति भावः ॥ ५९, ॥ ६०, ॥ ६१, ॥ ६२. ॥

प्रत्यक्षे षोढा संनिकर्षो वर्णितः । अलौकिकसंनिकर्षस्त्विदानीमुच्यते—

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥**

व्यापारः संनिकर्षः सामान्यलक्षण इति सामान्यं लक्षणं यस्येत्यर्थः । तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते। तच्चेन्द्रियसंबद्धविशेष्यकज्ञाने प्रकारीभूतं बोध्यम्। तथाहि । यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारः । तत्र धूमत्वेन संनिकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते । अत्र यदीन्द्रियसंबद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात् तत्र धूमत्वेन सहेन्द्रियसंबन्धाभावात्। मन्मते तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानम्, तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः । इन्द्रियसंबन्धश्च लौकिको ग्राह्यः । इदं च बहिरिन्द्रियस्थले । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्यासत्तिः ॥ ६३ ॥

---

अलौकिकसन्निकर्षस्त्विदानीमुच्यत इति इदानीं लौकिकसन्निकर्षनिरूपणानन्तरमित्यर्थः । **तत्र** सामान्यलक्षण इत्यत्र । तच्च सामान्यस्वरूपं च, तथा चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यवत्त्वसम्बन्धेन चक्षुरादिकं निखिले घटादौ गत्वा तत्र विषयतासम्बन्धेन ज्ञानं जनयतीति भावः । **अत्र यदीति** इन्द्रियसम्बद्धं सामान्यं प्रत्यासत्तिरित्युच्यते तदेत्यर्थः । यत्र चक्षुःसन्निकर्षेण धूम इति ज्ञानं जातं तत्र चक्षुःसंयोगविगमेऽपि ज्ञानलक्षणात्मकसान्निकर्षस्य तदानीं धूमे सत्त्वात्तादृशज्ञानमादायेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारस्य धूमत्वादेर्धूमाद्यन्तरे सत्त्वाद्धूमाद्यन्तराणां सामान्यलक्षणया ज्ञानापत्तिः स्यादत आह—**लौकिको ग्राह्य इति** ॥ नन्वेवमणुत्वेन यत्किंचिदणूपस्थितावणुत्वसामान्यलक्षणया यावदणुविषयकं मानसं ज्ञानं न स्यात्तदाणौ मनसो लौकिकसन्निकर्षाभावादत आह—**इदं चेति** तथा च बहिरिन्द्रियेण सामान्य-

परंतु समानानां भावः सामान्यम्, तच्च क्वचिन्नित्यं घटत्वादि क्वचिच्चानित्यं घटादि। यत्रैको घटः संयोगेन भूतले समवायेन कपाले ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति अत्रेदं बोध्यम्। परंतु सामान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः। किंतु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात्। सामान्यस्य तदानीमभावात्। किंचेन्द्रियसंबद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसंबन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह—

**आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते।**

आसत्तिः प्रत्यासत्तिरित्यर्थः। तथाच सामान्यलक्षण इत्यत्र लक्षणशब्दस्य विषयोऽर्थः। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते॥

ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह—

---

लक्षणया ज्ञाने जननीये तद्विवक्षितं, न तु मानसे सामान्यलक्षणाजन्ये ज्ञानेऽपीति न पूर्वोक्तदोष इति भावः॥ ६२॥

**आसत्तिराश्रयाणां** त्वित्यादिमूलमवतारयितुं भूमिकां रचयति—**परन्त्वि-त्यादिना। समानानामिति** तथा च प्रकृते सामान्यपदं यौगिकमेव न तु पारिभाषिकमिति भावः। **अत्रेदं बोध्यमिति** ज्ञायमानमनित्यं सामान्यं तत्र प्रत्यासत्तिरिति बोध्यमित्यर्थः। **किन्त्विति** एवं चेत्यर्थः। **तस्मात्सामान्यविषयकं ज्ञानमिति**—इन्द्रियसम्बद्धविशेष्यकं सामान्यप्रकारकं ज्ञानं प्रत्यासत्तिरित्यर्थः। यद्वेन्द्रियसम्बन्धाभावदशायां सामान्यप्रत्यासत्त्या ज्ञानोत्पादस्याग्रे मूलकृतैव वारणीयत्वात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यस्य यथाश्रुतार्थक-

**तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥**

अस्यार्थः । यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता । सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम् । तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जायते ॥ ६३ ॥ ६४ ॥

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।**

सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति । ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति । अत्रायमर्थः । प्रत्यक्षे संनिकर्षं विना भानं न संभवति । तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते । न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यं, प्रत्यक्षधूमे वह्निसंबन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः । मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसंदेहः संभवति । न च सामान्यल-

---

तत्रैव सम्यगिति सुविचारणीयमिति दिक् । अणुत्वज्ञानमात्रेणैव सकलाणुगोचरस्य मानसबोधस्य सर्वानुभवसिद्धत्वादाह—बहिरिति ॥ ६४ ॥

**यदि ज्ञानरूपेति** अत्रत्यो यदि शब्दः सामान्यलक्षणापीत्युत्तरं योजनीयः । तयोर्ज्ञानलक्षणसामान्यलक्षणयोरित्यर्थः । सामान्यलक्षणास्वीकारे बीजमाह—**अत्रेति** । **अयमर्थः** अयमभिप्रायः । **न सम्भवतीति** प्रत्यक्षविषयतायाः सन्निकर्षानुयोगित्वव्याप्यत्वादिति भावः । **संशयानुपपत्तेरिति** प्रत्यक्षधूमे व्याप्तेर्निर्णयादन्यधूमस्य चानुपस्थितत्वेन धर्म्मिज्ञानं विना संशयानुपपत्तेरिति भावः । विशिष्य तत्तद्व्यक्तित्वेनेत्यर्थः । ज्ञानलक्षणास्वीकारे बीज-

क्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यं, प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात् । एवं ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात् । यद्यपि सामान्यलक्षणयापि सौरभभानं संभवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणया । एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया ॥

**योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥**

योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थः।युक्तयुञ्जानभेदत इति।युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः॥ ६५॥

**युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः**

युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति । द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ॥ इति श्री विश्वनाथ पञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम् ॥

---

माह—एवमिति । कथं स्यादिति सौरभस्य चक्षुर्ग्राह्यत्वाभावाद्घ्राणसम्बन्धस्य च तदानीमभावादिति भावः । **सौरभत्वभानमिति** स्वरूपतः सौरभत्वस्य भानमित्यर्थः । ज्ञानलक्षणया ज्ञानलक्षणयैवेत्यर्थः । तदानीं सौरभत्वांशे धर्मांतरस्यागृहीततया सामान्यलक्षणया तज्ज्ञानासम्भवादिति भावः । सौरभत्वस्यापि यथाकथंचित्सामान्यलक्षणया भानेऽप्याह—**एवं यत्रेति** ज्ञानलक्षणया ज्ञानलक्षणयैवेत्यर्थः । तत्र धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमवृत्तित्वसम्बन्धेन धूलिपटलेऽभावाद्धूलिपटले धूमभ्रमानन्तरमिमं धूमं जानामीत्यनुव्यवसाये धूलिपटलस्य भानं ज्ञानलक्षणां विना न सम्भवतीति भावः ॥ ६५ ॥

सर्वदैव ध्यानाद्यभावेऽपीत्यर्थः । **द्वितीयस्य** युञ्जानस्य । इति शम् ॥

**इति श्रीपण्डितश्रीगोविंदरामसूनुवंशीधरविरचितायां मुक्तावल्यन्वयार्थदीपिकायां प्रत्यक्षखण्डम् ॥**

अनुमितिं व्युत्पादयति—

**व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥६६॥**

**अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि ।**

अनुमायामनुमितौ व्याप्तिज्ञानं करणम् । परामर्शो व्यापारः । तथा हि । येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात्स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलां धूमलेखां पश्यति । तदनन्तरं धूमो वह्निव्याप्य इत्येवं रूपं व्याप्तिस्मरणं भवति । पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते । तदनन्तरं पर्वतो वह्निमानिति ज्ञानम् । तदेवानुमितिः । अत्र प्राचीनास्तु

---

संप्रत्युपजीव्योपजीवकभावसंगत्यानुमानखण्डः प्रारभ्यते **अनुमिति-मिति** । करणे निर्दिष्ट एव व्यापारे जिज्ञासोदयान्मूले पश्चान्निर्दिष्टमपि करणं प्रथमं दर्शयति **व्याप्तिज्ञानमिति** । परामर्शः लिङ्गपरामर्श इत्यर्थस्तेन परामर्शपदवाच्यस्य ज्ञानमात्रस्यानुमित्यहेतुत्वेऽपि न क्षतिः. लिङ्गपरामर्श इत्यस्य च लीनमर्थं गमयतीति व्युत्पत्त्या व्याप्तिविशिष्टपक्षधर्मताविशिष्टहेतुर्लिङ्गं तस्य परामर्शस्तथा च विषयतासम्बन्धेन तद्विशिष्टं ज्ञानं व्यापार इति परामर्शो व्यापार इत्यस्यार्थो बोध्यः । परामर्शे व्याप्तिज्ञानजन्यत्वे सत्यनुमितिजनकत्वरूपव्यापारत्वमुपपादयति **तथाहीत्यादिना** । **अविच्छिन्नमूलां धूमरेखामिति** यादृशधूमे वह्निव्याप्तिः पूर्वं महानसादौ गृहीता तादृशधूमरेखामित्यर्थः । **व्याप्तिस्मरणं तस्य भवतीति** धूमदर्शनेन संस्कारस्योद्बुद्धत्वादितिभावः । **स एवेति** तथा च स्मरणात्मकव्याप्तिज्ञानस्य सर्वत्र सत्त्वाद्व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वात्परामर्शो व्यापार इति सिद्धम् । अनुमितिं प्रति लिङ्गपरामर्शस्य कारणत्वं परामृश्यमानलिङ्गस्य वेत्यत्र विनिगमनाभावादुभयोरपि हेतुत्वं सिद्ध्यति, तत्र विषयविधया हेतुजन्यत्वे सति हेतुजन्यानुमितिजनकत्वसम्भवात्परामर्शस्य व्यापारत्वं व्यापारवत्कारणत्वाच्च लिङ्गस्यानुमितिकरणत्वमित्याशयवतां प्राचीनानां मतं दर्शि-

व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमितिकरणमिति वदन्ति, तद्दूषयति ज्ञायमानमिति ।

**अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥**

लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह—अनागतादीति । यद्यनुमितौ लिङ्गं करणं स्यात्तदाऽनागतेन विनष्टेन वा लिङ्गेन अनुमितिर्न स्यादनुमितिकरणस्य लिङ्गस्य तदानीमभावात् ॥ ६६ ॥ ६७ ॥

**व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।**

व्याप्यस्येति । व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकम् । तच्च व्याप्यः पक्षे इति ज्ञानं पक्षो व्याप्यवानिति ज्ञानं वा । अनुमितिस्तु पक्षे व्याप्य इति ज्ञानात्पक्षे साध्यमित्याकारिका, पक्षो व्याप्यवानिति ज्ञानात्पक्षः साध्यवानित्याकारिका । द्विविधादपि परामर्शात्पक्षः साध्यवानित्येवानुमितिरित्यन्ये । ननु वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति स्मरणम्, तत्र ज्ञानद्वयादेवानुमितिदर्शनाद्व्याप्तिविशिष्टवैशि-

---

यति अत्र **प्राचीनास्त्वित्यादिना** । **ज्ञायमानं** वर्तमानकालीनज्ञानविषयीभूतमित्यर्थः । **दूषयतीति** तदानीमनुमित्यव्यवहितपूर्वक्षणे परामर्शाव्यवहितपूर्वक्षणे वेत्यर्थः ॥ ६६-६७ ॥

मूलस्यार्थं स्पष्टयति **व्याप्तिविशिष्टस्येत्यादिना** पक्षत्वं चात्रानुमित्युद्देश्यत्वं बोध्यम् । **तच्च** व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहि ज्ञानं च **पक्षे व्याप्यः** पर्वते वह्निव्याप्यो धूम इत्यादिरूपः पक्षप्रकारकव्याप्यविशेष्यक इत्यर्थः । **पक्षो व्याप्यवान्** पर्वतो वह्निव्याप्यधूमवानित्यादिस्वरूपः पक्षविशेष्यकव्याप्यप्रकारक इत्यर्थः । **द्विविधात्**पक्षविशेष्यकव्याप्यविशेष्यकोभयपरामर्शादपीत्यर्थः । अत्रानुभव एव शरणम् । मीमांसकः शङ्कते **नन्विति ज्ञानद्वयादेव** ज्ञानद्वयादपीत्यर्थः । न सर्वत्र कारणं न सर्वत्रानुमित्यव्यवहितपूर्ववृत्तिरित्यर्थः । तथा च व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानत्वं नानुमितित्वा-

ष्टयावगाहिज्ञानं न सर्वत्र कारणं किंतु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनैव कारणत्वस्यावश्यकत्वात्, तत्र विशिष्टवैशिष्ट्यज्ञानकल्पने गौरवाच्चेति चेन्न, व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेर्लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम्। किंच धूमवान्पर्वत इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्त्वात्। न च तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यं, चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यादिति। यदि तु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकं तत्पुरुषीयपक्षधर्मताज्ञानं

---

वच्छिन्नं प्रति कारणतावच्छेदकमिति भावः। ननु तर्ह्यनुमितिं प्रति किमवच्छेदकमत आह **किन्त्विति**। **व्याप्यतेति** व्याप्यताया अवच्छेदकः प्रकारो यस्मिन्नेवंभूतं यत्पक्षसम्बन्धिविषयकं ज्ञानं तस्य भावस्तेनेत्यर्थः। **आवश्यकत्वादिति** व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानत्वस्योभयमतसिद्धनियतपूर्ववर्तितावच्छेदकताकत्वादित्यर्थः। ननु ज्ञानद्वयस्थलेऽपि विशिष्टज्ञानं कल्प्यतामत आह **तत्रेति** यत्र ज्ञानद्वयानन्तरमनुमितेरनुभवसिद्धत्वं तत्रेत्यर्थः। **व्याप्यतावच्छेदकाज्ञानेऽपि** व्याप्यतावच्छेदकप्रकारकनिर्णयाभावेऽपीत्यर्थः। **वह्निव्याप्यवान्** वह्न्यभाववदवृत्तिमानित्यर्थः। ननु व्याप्यतावच्छेदकप्रकारकत्वमप्यस्त्वेवेत्यत आह **लाघवाच्चेति** व्याप्यतावच्छेदकत्वापेक्षया व्याप्तिप्रकारकत्वस्यावच्छेदकाघटितत्वेन लघुत्वादितिभावः। नन्वनन्तस्थलेषु व्याप्तिप्रकारकपक्षधर्मताज्ञानकल्पनापेक्षया अवच्छेदकत्वघटितकारणताकल्पनेऽपि न गौरवमत आह **किं चेति**। **गृह्यमाणेति** वर्तमानकालीनज्ञानविषयीभूता या व्याप्यता तादृशव्याप्यताया अवच्छेदकः प्रकारो यस्मिन्नेवंभूतं यत्पक्षधर्म्मताज्ञानं तस्येत्यर्थः। तथा च धूमो वह्निव्याप्य इति ज्ञानाभावदशायां व्याप्यताया गृह्यमाणत्वाभावान्न धूमवान्प-

तत्पुरुषीयानुमितौ हेतुरित्युच्यते, तदाऽनन्तकार्यकारणभावः। मन्मते तु समवायसंबन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसंबन्धेनानुमितिं जनयतीति नानन्तकार्यकारणभावः। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रं कारणमित्युच्यते, तदा कार्यकारणभावद्वयं, वह्निव्याप्यो धूम आलोकवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तिः स्यात्। इत्थं च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयं फलमुखगौरवस्यादोषत्वात्॥

---

र्वत इति ज्ञानादप्यनुमित्यापत्तिरितिभावः। **अनन्तकार्यकारणभाव** इति अनन्तपुरुषघटितत्वेनानन्तत्वादितिभावः। ननु तत्रापि मते तत्पुरुषीयव्याप्तिप्रकारकपक्षधर्म्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्यवश्यं वक्तव्यमन्यथा देवदत्तीयव्याप्तिप्रकारकपक्षधर्म्मताज्ञानाद्यज्ञदत्तस्याप्यनुमितिः स्यादिति तुल्यमेवेत्यत आह **मम त्विति**। **नानन्तकार्य्यकारणभाव** इति अवश्यं वक्तव्येन कार्य्यतावच्छेदककारणतावच्छेदकसम्बन्धप्रवेशेनैव पूर्वोक्तदोषवारणान्न तत्र तत्पुरुषीयत्वनिवेश इति भावः। **स्वतंत्रमिति** व्याप्तिप्रकारकज्ञानत्वेन व्याप्तिप्रकारकं ज्ञानं पक्षधर्म्मताज्ञानत्वेन पक्षधर्म्मताज्ञानं च घटादौ दण्डचक्रचीवरादिवदित्यर्थः। तथा च चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्म्मताज्ञानान्न मैत्रेऽनुमित्यापत्तिः, स्वतंत्रेण कारणीभूतस्य व्याप्तिप्रकारकज्ञानस्य मैत्रेऽभावात्। नापि चैत्रे तदापत्तिः, चैत्रेऽनुमितिकारणीभूतस्य पक्षधर्म्मताज्ञानस्याभावादिति तत्पुरुषीयत्वानिवेशेन नानन्तकार्यकारणभाव इति भावः। **कार्यकारणभावद्वयमिति** तथा च गौरवमितिभावः। ननु तत्रापि मते व्याप्तिप्रकारकपक्षधर्म्मताज्ञानत्वेन पक्षधर्म्मताविषयकव्याप्तिप्रकारकज्ञानत्वेन वा कारणत्वमित्यत्र विनिगमनाभावात्कार्य्यकारणभावद्वयमेवेत्यत आह **वह्निव्याप्य इति**। इत्थं च पूर्वोक्तयुक्त्या व्याप्तिप्रकारकपक्षधर्म्मताज्ञानत्वेन हेतुत्वे सिद्धे च। **विशिष्टज्ञानं** व्याप्तिप्रकारकपक्षधर्म्मताज्ञानमित्यर्थः। ननु ज्ञानद्वयस्थले विशिष्टज्ञानकल्पने कल्पनागौरवं स्यादत आह **फलमुखगौरवस्येति** फलं कार्य्यकारणभावस्तन्मुखं तदधीनं यद्गौरवं तस्यादोषत्वादित्यर्थः।

**व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥६८॥**

व्याप्यो नाम व्याप्त्याश्रयः, तत्र का व्याप्तिरित्यत आह व्याप्तिरिति । साध्यवदन्येति । वह्निमान् धूमादित्यादौ साध्यो वह्निः साध्यवान्महानसादिः तदन्यो जलह्रदादि तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्तायःपिण्डादौ वह्नेः सत्त्वान्नातिव्याप्तिः । अत्र येन संबन्धेन साध्यं तेनैव संबन्धेन साध्यवान्बोध्यः । अन्यथा समवायसंबन्धेन वह्निमान्वह्नेरवयवस्तदन्यो महानसादिस्तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् । साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान्बोध्यः तेन यत्किंचिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः । येन संबन्धेन हेतुता तेनैव संम्बन्धेन

---

परामर्शनिरूपणानन्तरं व्याप्तिनिरूपणे उपोद्धातसङ्गतिं दर्शयति **व्याप्यो नामेति** मूलेऽसम्बन्धो नाम वृत्तित्वाभावस्तथा च साध्यवदन्यनिरूपितवृत्तित्वाभाव इति मूलोक्तं व्याप्तिलक्षणं लक्ष्ये प्रतिपादयति मुक्तावल्यां **वह्निमान् धूमादित्यादिना । तदवृत्तित्वं धूमस्येति** जलह्रदवृत्तित्वं मीनादौ वृत्तित्वाभावो धूमस्येत्यर्थ । अलक्ष्ये लक्षणासत्त्वं प्रतिपादयति **धूमवान्वह्नेरिति ।** येन सम्बन्धेन साध्यमित्यस्याग्रे अनुमित्या विषयीक्रियत इति पूरणीयं । **बोध्य इति** तथा च साध्यतावच्छेदकसम्बन्धेन साध्यवदन्यनिरूपितवृत्तित्वाभाव इति लक्षणं बोध्यमित्यर्थः । **अन्यथा** येन केनचित्सम्बन्धेन साध्यवत्त्वविवक्षण इत्यर्थः । **साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान्बोध्य इति** साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितवृत्तित्वाभाव इति लक्षणं बोध्यमित्यर्थः । **तेन** भेदे साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वविवक्षणेनेत्यर्थः । **भिन्ने पर्वतादौ** तद्वह्निमान्नेति भेदवति पर्वतादावित्यर्थः । **न क्षतिः** नाव्याप्तिः । साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदः प्रकृते वह्निमान्नेति प्रतीतिसाक्षिको भेदस्तस्य च पर्वतेऽसत्त्वादिति भावः । **तेनैव सम्बन्धेन साध्यवदन्यावृत्तित्वं बोध्यमिति**

साध्यवदन्यावृत्तित्वं बोध्यम् । तेन साध्यवदन्यस्मिन्धूमावयवे धूमस्य समवायसंबन्धेन सत्वेऽपि न क्षतिः । साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः । अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात्साध्यवदन्यस्मिन्गुणादाववृत्तित्वं नास्ति तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यम् । हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति फलितोऽर्थः ६८ ॥

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिः, किंच सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन्सामान्यादौ

---

साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाव इति लक्षणं बोध्यमित्यर्थः । न क्षतिः नाव्याप्तिः । **साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाव इति** साध्यवदन्यनिरूपितवृत्तित्वं नास्तीतिप्रतीतिविषयोऽभाव इत्यर्थः । तथा च साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावो व्याप्तिरित्यत्र तात्पर्य्यं इतिभावः । **नातिव्याप्तिरिति** वह्नौ साध्यवदन्यजलह्रदनिरूपितवृत्तित्वाभावसत्त्वेऽपि साध्यवदन्यनिरूपितवृत्तित्वं नास्तीतिप्रतीतिविषयाभावस्यासत्त्वादितिभावः । **ऐक्यादिति** विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यादिति भावः । **फलितोऽर्थ इति** तथा च साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितानवच्छेदकं हेतुतावच्छेदकं व्याप्तिरिति निष्कृष्टलक्षणं बोध्यमित्यर्थः ६८

अथवेत्यादिलक्षणमवतारयितुं प्रथमलक्षणे दोषमाह **नन्वित्यादिना** । केवलान्वयिन्यत्यन्ताभावाप्रतियोगिनि । ननु केवलान्वयित्वज्ञानकाले साध्यसंदेहरूपपक्षताया अभावान्नानुमितिस्तच्छून्यकाले तु भ्रमात्मकव्याप्तिज्ञानादनुमितिर्भवत्येवेत्यत आह—**किंचेति** । मूले पठितस्य निष्ठपदस्य विवरणं

हेतुतावच्छेदकसंबन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिश्चात आह —

**अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।**
**साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥**

हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः, तथा च हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते । अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः । न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यं, तत्तद्वह्न्यादेरप्युभयाभावसत्त्वादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः । गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च, तथापि प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति वाच्यम् । ननु रूपत्वव्याप्य-

---

वृत्तिरिति । **तत्तद्वह्न्यादेरिति** चालनीन्यायेन पर्वते महानसीयत्वोपलक्षितवह्नेस्तद्व्यक्तित्वेनाभावो महानसे च पर्वतीयत्वोपलक्षितवह्नेस्तद्व्यक्तित्वेनाभाव इत्येवं हेतुमन्निष्ठोऽभावस्तत्तद्वह्न्यभावस्तत्प्रतियोगित्वं वह्नौ वर्तत इति पर्वतो वह्निमान्धूमादित्याद्यनेकव्यक्तिसाध्यत्वेऽव्याप्तिरितिभावः । **समानाधिकरणवह्निधूमयोरेवेति** पर्वतीयधूमे पर्वतीयवह्नेर्महानसीयधूमे च महानसीयवह्नेर्व्याप्तिः स्वीक्रियते, न तु धूमत्वावच्छिन्ने वह्नित्वावच्छिन्नस्येत्यर्थः । तथा च महानसीयत्वोपलक्षितवह्नेस्तद्व्यक्तित्वेन पर्वतेऽभावसत्त्वेऽपि न पूर्वोक्ताव्याप्तिः सम्भवति, पर्वते पर्वतीयवह्नेरभावस्य कथंचिदप्यसत्त्वादितिभावः । ननु पर्वतीयवह्निव्यक्तेस्तत्र सत्त्वे कथं तत्तद्व्यक्तेरप्युभयाभावसत्त्वं प्रतिपाद्यत इत्यत आह **एकसत्त्वेऽपीति** । तथा च पर्वतीयत्वोपलक्षितवह्निव्यक्तेस्तत्र सत्त्वेऽप्युभयाभावस्यापि तत्र सत्त्वे विरोधाभाव एवेति भावः । ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाभावस्य विशेषणान्नाव्याप्तिरत आह **गुणवानिति** । **अव्याप्तिश्चेति** हेतुमति जले जलान्यवृत्तिगुणानां तत्तद्व्यक्तित्वेन, एवं जलवृत्तिगुणानां हेत्वधिकरणपृथिव्यादौ तत्तद्व्यक्तित्वेनाभावसत्त्वाद्द्रव्यत्वाधिकरणवृत्त्यभावाप्रतियोगित्वा-

जातिमद्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयस्तासां च शुक्लत्वादिजातीनां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न, तत्र परंपरया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात् । नहि तादृशधर्मावच्छिन्नाभावः क्वापि पृथिव्यामस्ति । रूपत्वव्याप्यजातिमान्नास्तीति बुद्ध्यापत्तेः । एवं दण्डयादिसाध्ये परंपरासंबद्धं दण्डत्वादिकमेव साध्यतावच्छेदकं तच्च प्रतियोगितानवच्छेदकमिति । साध्यादिभेदेन व्याप्तिभेदात्तादृशस्थले साध्यतावच्छेदकता-

---

भावात्साध्यस्येतिभावः । इति **वाच्यमिति** तथा च गुणादिरूपसाध्यस्य हेत्वधिकरणवृत्तितद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वेऽपि साध्यतावच्छेदकस्य गुणत्वादेर्न तादृशाभावप्रतियोगितावच्छेदकत्वमिति न गुणवान्द्रव्यत्वादित्यादावव्याप्तिरितिभावः । एवमुभयाभावस्यापि प्रतियोगितावच्छेदकमुभयत्वं साध्यतावच्छेदकं च वह्नित्वं प्रतियोगितानवच्छेदकमेवेति न तदादायाप्यव्याप्तिरितिदिक् । तथा च हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति व्याप्तिलक्षणं जातं । तत्र शङ्कते **नन्विति** नीलघटादिवृत्त्यभावप्रतियोगित्वमिति हेत्वधिकरणीभूते नीलघटे शुक्लरूपं नास्ति पीतरूपं नास्ति, रक्तघटे च नीलरूपं नास्तीत्येवं शुक्लाद्यभावप्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदकानामित्यव्याप्तिरित्यर्थः **तत्र** रूपत्वव्याप्यजातिमत्वानित्यत्र । **परम्परया** स्वाश्रयसमवायेन तथा च शुक्लत्वादीनां हेत्वधिकरणीभूतनीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वेऽपि साध्यतावच्छेदकस्य **रूपत्वव्याप्यजातित्वस्य** तु न तादृशाभावप्रतियोगितावच्छेदकत्वमिति नाव्याप्तिरितिभावः । **तादृशधर्म्मावच्छिन्नाभाव** उक्तपरम्परासम्बन्धेन जातित्वावच्छिन्नाभाव इत्यर्थः । **बुद्ध्यापत्तेरिति** यदि तादृशोऽभावः पृथिव्यां भवेत्तदा पृथिव्यां रूपत्वव्याप्यजातिमान्नास्तीति प्रतीतिः स्यात्, वस्तुतः रूपं नास्तीति बुद्ध्यापत्तिः स्यादित्यत्रैव तात्पर्य्यमिति बोध्यम् । **साध्यादी**त्यादिना साधनादिपरिग्रहः । **तादृशस्थले** विशिष्टसाध्यतावच्छेदकस्थले ।

वच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि वदन्ति । हेत्वधिकरणं च हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यं, तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः । एवं हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणं बोध्यम् । तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः । अभावश्च प्रतियोगिव्यधिकरणो बोध्यः । तेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैव एतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः । न च प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरण-

---

लक्षणघटकमिति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतावच्छेदकतावच्छेदकं तद्विशिष्टावच्छिन्नसाध्यसामानाधिकरण्यमेव विशिष्टसाध्यतावच्छेदकस्थले व्याप्तिर्वाच्येतिभावः । पूर्वोक्तरीत्यैव निर्वाहे तत्रतादृशव्याप्तिज्ञानस्य कारणत्वं नोचितं कारणतावच्छेदकगौरवादित्यस्वरसः वदन्तीत्यनेन सूचितो बोध्यः । हेतुतावच्छेदकविशिष्टाधिकरणमिति हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्येवं लक्षणं कर्तव्यमित्यर्थः । तेन हेतुत्वावच्छेदकावच्छिन्नहेत्वधिकरणविवक्षणेन । शुद्धसत्ताधिकरणेत्यादि हेतोर्गुणकर्मान्यत्वविशिष्टसत्त्वस्य विशिष्टं शुद्धान्नातिरिच्यत इतिन्यायेन सत्तातोऽनतिरिक्तत्वादितिभावः नाव्याप्तिरिति हेतुतावच्छेदकविशिष्टस्य विशिष्टसत्त्वस्याधिकरणं न गुणादिकं, गुणादौ विशिष्टसत्त्वं नास्तीति प्रतीत्यनापत्तेः, किंतु द्रव्यमेव, तद्वृत्त्यभावप्रतियोगित्वं न द्रव्यस्येति नाव्याप्तिरित्यर्थः । हेतुतावच्छेदकसम्बन्धेनेति हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्येवं लक्षणं बोध्यमित्यर्थः । कपिसंयोगस्य नाव्याप्तिरिति मूलावच्छेदेन कपिसंयोगाभावस्य प्रतियोगिव्यधिकरणत्वाभावादितिभावः ।

वृत्तित्वं तदा तथैवाव्याप्तिः । प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव वृक्षेऽपि मूलावच्छेदेन सत्त्वात् । यदि तु प्रतियोग्याधिकरणावृत्तित्वं तदा संयोगी सत्त्वादित्यादावतिव्याप्तिः । सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्याधिकरणद्रव्यवृत्तित्वादिति वाच्यम्, हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात्, स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः । प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वाच्यम् । तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावप्रतियोगिसत्ताधिकरणत्वेऽपि न

---

प्रतियोगिव्यधिकरणपदस्य प्रतियोग्यनधिकरणवृत्तित्वमर्थः प्रतियोग्यधिकरणावृत्तित्वं वेति विकल्प्याद्ये दूषणमाह—**तथैवेति** यथा प्रतियोगिव्यधिकरणपदादानेऽव्याप्तिस्तथा तद्दानेऽपीत्यर्थः **तस्यैवेति** अधिकरणभेदेनाभावभेदस्यानभ्युपगमादितिभावः । द्वितीये दूषणमाह **यदि त्विति प्रतियोग्यधिकरणावृत्तित्वं** प्रतियोग्यधिकरणवृत्तिभिन्नत्वं **प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति** प्रतियोग्यधिकरणद्रव्यवृत्तित्वेन संयोगाभावस्य लक्षणघटकत्वं न सम्भवतीति न संयोगाभावो हेत्वधिकरणे धर्तुं शक्यते, किं तु घटाद्यभावस्तत्प्रतियोगित्वं च घटादेरप्रतियोगित्वं च संयोगस्येत्येवं संयोगी सत्त्वादित्यादावतिव्याप्तिरितिभावः । **इति निष्कर्ष इति** स्वप्रतियोग्यनधिकरणहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति व्याप्तिलक्षणनिष्कर्ष इत्यर्थः । **सत्ताधिकरणत्वेऽपीति** तथा च विशिष्टसत्ताभावो न प्रतियोगिव्यधिकरण इति नासौ धर्तुं शक्यते, किंत्वन्याभाव एव, तस्य च तत्प्रतियोगितानवच्छेदकमेव विशिष्टसत्तात्वमित्यतिव्याप्तिः । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणत्वाविवक्षणे तु विशिष्टसत्ताभावस्यापि लक्षणघटकत्वसम्भवान्न **क्षतिर्नातिव्याप्तिः** । एवमग्रेऽपि न **क्षतिरित्यस्य** नाति-

क्षतिः। एवं साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम्। तेन ज्ञानवान् द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणघटादेर्विषयतासंबन्धेन ज्ञानाधिकरणत्वेऽपि न क्षतिः। इत्थं च वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽपि न क्षतिः। ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वं तत्सामान्यस्य वा यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वं वा विवक्षितम्। आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यादौ तथैवाव्याप्तिः कपिसंयोगाभावस्य

---

व्याप्तिरित्यर्थो बोध्यः। ननूपस्थितिकृतलाघवात्प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वमेवोच्यतां तावतैव ज्ञानवान्सत्त्वादित्यादावतिव्याप्तिवारणसम्भवादित्यत आह **इत्थं चेति** साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणविवक्षणे चेत्यर्थः। **वह्निविरहसत्त्वेऽपीति** तथा च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणे समवायेन वह्न्यभावस्यापि लक्षणघटकत्वेन धर्तुं शक्यत्वाद्वह्निमान्धूमादित्यत्राव्याप्तिः स्यात्। साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणे तु न समवायेन वह्न्यभावो धर्तुं शक्यते तस्य साध्यतावच्छेदकसम्बन्धेन संयोगेन प्रतियोगिसमानाधिकरणत्वादिति नाव्याप्तिरितिभावः। तथा च साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति व्याप्तिलक्षणं जातं। तत्र शङ्कते **नन्विति यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वमिति** अत्र यत्किंचित्पदं प्रतियोगितावच्छेदकेत्यनेनान्वयी तथा च यत्किंचिद्यत्प्रतियोगितावच्छेदकं तदवच्छिन्नस्य वानधिकरणत्वमित्यर्थः। **आद्ये** प्रतियोगितावच्छेदकाववच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वविवक्षण इत्यर्थः। **तथैवेति** हेत्वधिकरणे प्रतियोग्यनधिकरणत्वविवक्षणेऽपि न निस्तार इति भावः। तदेव स्पष्टयति—कपिसंयोगाभावेत्यादिना। **तदनधिकरणं वृक्ष**

प्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोऽपि भवति तदनाधिकरणं वृक्ष इति। द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात्। न च वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसंबन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरितिवाच्यम्, घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणं

---

इति तथा च कपिसंयोगाभावस्यापि लक्षणघटकत्वेन वृक्षे मूलावच्छेदेन धर्तुं शक्यत्वात्तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगत्वमित्यव्याप्तिस्तदवस्थेतिभावः। द्वितीये प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणत्वविवक्षण इत्यर्थः। **पूर्वक्षणवृत्तित्वविशिष्टेति** पूर्वक्षणवृत्तित्वविशिष्टस्य स्वस्य घटाभावादेर्योऽभावस्तदात्मकप्रतियोगिसमानाधिकरणत्वादित्यर्थः। अयमाशयः पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावो घटाभावस्वरूप एव प्रथमाभावसमनियतत्वेन तृतीयाभावस्य प्रथमाभावस्वरूपत्वात्। तथा च घटाभावस्य घट इव पूर्वक्षणवृत्तित्वविशिष्ट घटाभावाभावोऽपि प्रतियोगी, तस्य च घटाभावाधिकरणेऽप्युक्तरक्षणावच्छेदेन सत्त्वात्प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति, तथा च व्याप्तिलक्षणस्यासम्भव इति भावः। न चात्यन्ताभावाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वेन पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावोऽपि घटस्वरूप एवेति वाच्यं, यतो न सर्वत्रैवात्यन्ताभावाभावः प्रथमाभावप्रतियोगिस्वरूप एव, किंतु यत्र प्रथमाभावप्रतियोगिसमनियतस्तत्रैव। प्रकृते तु पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य पूर्वक्षणं विहाय घटाभावाधिकरणादौ सर्वत्रापि विद्यमानत्वेन समनियतत्वाभावान्न तस्य घटस्वरूपत्वमित्यन्यत्र विस्तरः। **घटाभावात्मकतयेति** अभावाधिकरणकाभावस्य लाघवेनाधिकरणानतिरिक्तत्वादितिभावः। ननु घटाभाववह्न्यभावयोरैक्ये वह्निमति घटशून्यदेशे वह्निर्नास्ति,

च पर्वतादिरित्येवं क्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात् । यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते तथापि धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः । तत्र साध्यतावच्छेदकसंबन्धः स्वरूपसंबन्धः, तेन संबन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति । तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः । तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इति । मैवम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् । ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसंबन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणत्वात् । अत्र केचित् । महाकाल-

---

एवं घटवति वह्निशून्यदेशे च घटो नास्तीति प्रतीतिः स्यादित्यत आह—**भिन्न इत्युच्यत इति । पूर्वक्षणवृत्तित्वविशिष्टस्वाभावेति** पूर्वक्षणवृत्तित्वविशिष्टं यत्स्वं घटाभावादि तदभावात्मकेत्यर्थः । तथा चाभावसाध्यकस्थलेऽव्याप्तिरितिभावः । **तृतीये** यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणत्वविवक्षणे । सांप्रदायिकमते द्रव्ये संयोगसामान्याभावस्यानङ्गीकारादाह—**कपीति तस्य** कपिसंयोगाभावाभावस्य **तत्प्रतियोगितावच्छेदकं** कपिसंयोगाभावाभावप्रतियोगितावच्छेदकमित्यर्थः । **तदवच्छिन्नानधिरणत्वं** गुणसामान्याभावत्वावच्छिन्नानधिकरणत्वमित्यर्थः । **यादृशेति** यादृश्याः प्रतियोगितायाः अवच्छेदकावच्छिन्नानधिरणत्वं हेतुमतस्तादृशप्रतियोगितायाः अनवच्छेदकत्वस्य **विवक्षितत्वाद्**प्रतियोगिपदेन विवक्षितत्वादित्यर्थः । तथा च कपिसंयोगाभाववानात्मत्वादित्यादौ गुणसामान्याभावत्वावच्छिन्नप्रतियोगितायाः एव यादृशप्रतियोगितापदेनोपादातुं शक्यतया तदनवच्छेदकत्वस्य

भेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणो महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात्। महाकाले महाकालभेदाभावात्। वस्तुतस्तु प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्संबंधावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम्। व्यापकसामानाधिकरण्यं च व्याप्तिः। इत्थं च कालो घटवान कालपरिमाणादित्यादौ संयोगसंबन्धेन यो घटाभावस्तत्प्रतियोगिनो घटस्यानधिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसंबन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः। धूमवान् वह्नेः, इत्यादावतिव्याप्तिवारणाय सामान्यपदमुपात्तम्। ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं गुरुधर्मस्यानवच्छेदकत्वादिति चेन्न, कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति संक्षेपः ॥६९॥

---

कपिसंयोगाभाववत्वे सत्त्वान्नाव्याप्तिरितिभावः। ननु विशेषणतासम्बन्धेन महाकाले महाकालभेदासत्वेऽपि कालिकसम्बन्धेन तत्र महाकालभेदाविशिष्टघटसत्त्वे बाधकाभाव इत्यत आह **वस्तुतस्त्विति**। पर्वतो वह्निमान्धूमादित्यत्र प्रतियोगितावच्छेदकसम्बन्धेन संयोगेन प्रतियोगिनो घटादेरनधिकरणं यद्धेत्वधिकरणं पर्वतादिः तद्वृत्त्यभावप्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्ववह्नित्वावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन नाम संयोगसम्बन्धेन तद्धर्मावच्छिन्नस्य नाम वह्नित्वावच्छिन्नस्य तद्धेतुव्यापकत्वं नाम धूमव्यापकत्वं। व्यापकसामानाधिकरण्यं च व्याप्तिरितिभावः। काले घटवान्कालपरिमाणादित्यत्राव्याप्तिं वारयति **इत्थं चेत्यादिना**। **संक्षेप इति** यदि च कम्बुग्रीवादिमत्प्रतियोगिताकाभाव एव कम्बुग्रीवादिमान्नास्तीति प्रतीतेर्विषयो न तु कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वमपीत्युच्यते तदा यत्किंचिद्घटवत्यपि भूतलादौ कम्बुग्रीवादिमान्नास्तीति प्रतीतिः स्यादित्यादिकं मनसि निधायाह—संक्षेप इति ६९

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह ।

**सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥**

सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता तद्वान्पक्ष इत्यर्थः। सिषाधयिषामात्रं न पक्षता विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात् । अत एव साध्यसंदेहोऽपि न पक्षता विनापि संदेहं तदनुमानात् । सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव । अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम् । तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता । यत्र च सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता । यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता, सिषाधयिषाविरह-

---

पक्षतानिरुपणे सङ्गतिं दर्शयति **पक्षवृत्तित्वमित्यत्रेति** तथा चोपोद्घातसङ्गत्या पक्षतानिरूपणमितिभावः । मूलोक्तं पक्षतालक्षणं स्पष्टयति **सिषाधयिषयेति** सिषाधयिषा नामानुमित्सा, तस्या विरहोऽभावस्तद्विशिष्टायाः सिद्धेः साध्यनिश्चयस्याभावः पक्षतेत्यर्थः । पक्षतालक्षणे सिद्ध्यभावपदप्रवेशस्य प्रयोजनं दर्शयति सिषाधयिषामात्रमित्यादिना **मेघानुमानान्**मेघानुमितेरित्यर्थः । तथा च सिषाधयिषामात्रस्य पक्षतात्वे घनगर्जितेन मेघानुमितिस्थलेऽव्याप्तिः स्यादितिभावः । **अत एव** वक्ष्यमाणदूषणादेव **तदनुमानात्** मेघानुमानात् । सिषाधयिषाविरहरूपविशेषणस्य प्रयोजनमाह **सिद्धौ सत्यामिति**। अत इति तत्र पक्षतासिद्ध्यर्थमित्यर्थः । **तत्र सिषाधयिषायां सत्यामसत्यामपीति,** सत्यामुभयाभावप्रयुक्तविशिष्टाभावस्यासत्यां च विशेष्याभावप्रयुक्तस्योक्तविशिष्टाभावस्य सत्त्वादितिभावः । **सिद्धौ सत्यामसत्यां चेति** सत्यां विशेषणाभावप्रयुक्तस्यासत्यां तूभयाभावप्रयुक्तस्य विशिष्टाभावस्य सत्त्वादितिभावः । अनुमितिकारणीभूतपरामर्शस्य सत्त्वे सिद्धिरूपप्रातिबन्धकसत्त्वे च यद्यनुमित्सा वर्तेत तदा तस्य उत्तेजकत्वं वक्तव्यं, तदेव न सम्भवतीत्या-

विशिष्टसिद्धेः सत्त्वात् । ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्रासिषाधयिषाकाले परामर्शनाशान्नानुमितिः यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावदेवानुमितिः । यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति । एवमन्यत्रापि सिद्धिकाले परामर्शकाले च न सिषाधयिषा, योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्, तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न, यत्र वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षं स्मरणं वा, ततः सिषाधयिषा तत्र पक्षतासंपत्तये तद्विशेषणस्यावश्यकत्वात् । अत्रेदं बोध्यम् । यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ

---

शङ्कते **ननु यत्रेति** क्रमेणाव्यवधानेन । **एवमन्यत्रापीति** यत्र परामर्शसिषाधयिषासिद्धयः, एवं सिद्धिसिषाधयिषापरामर्शाः, एवं सिषाधयिषापरामर्शसिद्धयश्चेत्यर्थः । ननु सिद्धिकाले परामर्शकाले वा यत्रानुमित्सा तत्र पक्षतासंपादनायैवानुमित्साविरहविशिष्टत्वं सिद्धौ विशेषणमत आह—**सिद्धिकाले परामर्शकाले चेति** सिद्धिक्षणे परामर्शक्षणे च नानुमित्सेत्यर्थः । उभयत्रैव हेतुं दर्शयति **योग्यविभुविशेषगुणानां यौगपद्यनिषेधादिति** । **तत्कथमिति** प्रयोजनाभावान्न देयमितिभावः । **तद्विशेषणस्य** सिषाधयिषाविरहविशिष्टत्वरूपविशेषणस्य । **यादृशयादृशेति** घटानुमितिर्जायतामितीच्छासत्त्वेऽपि पर्वतो वह्निमानिति सिद्धयसत्त्वे वह्निमानित्यनुमित्युत्पत्तेः पर्वतो वह्निमानिति सिद्धिसत्त्वेऽपि घटानुमितिर्जायतामितीच्छाबलात्पर्वतो वह्निमानित्यनुमित्यापत्तिरत उक्तं **सिद्धिसत्त्व इति** । यल्लिङ्गकानुमितिरित्यस्याग्रेऽनुभवसिद्धेतिपूरणीयम् । तथा च यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे च यल्लिङ्गकानुमितिरनुभवसिद्धा तादृशतादृशेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन तल्लिङ्गकानुमितावुत्तेजकत्वमितिभावः

पक्षता। तेन सिद्धिपरामर्शसत्त्वेऽपि यत्किंचिज्ज्ञानं मे जायतामितिच्छायामपि नानुमितिः। वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षातिरिक्तं वह्निज्ञानं जायतामितीच्छायां तु भवत्येव। एवं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः। सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमितौ प्रतिबन्धिका वक्तव्या। तेन पर्वतस्तेजस्वी पाषाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः। परंतु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानु-

---

। तेनेति तत्तदिच्छाव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकत्वेनेत्यर्थः। नानुमितिरिति नानुमित्यापत्तिरित्यर्थः। यत्किंचिज्ज्ञानं जायतामितीच्छायास्तद्व्यक्तित्वेनोत्तेजकत्वानभ्युपगमादितिभावः। ननु तत्तद्व्यक्तित्वेनोत्तेजकत्वकल्पनापेक्षया लाघवादनुमितित्वप्रकारकेच्छात्वेनानुगतरूपेणैवोत्तेजकत्वं वक्तव्यमित्यत आह वह्निव्याप्येति। प्रत्यक्षसत्त्व इत्यस्याग्रे शाब्दसामग्र्यभावे चेति पूरणीयम् शाब्दसामग्रीसत्त्वे तु शाब्दबोधेनैव प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छाविषयसिद्धिसम्भवात् भवत्येवेत्यनुमितिरितिशेषः। तथा चानुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे तत्रानुमितिर्न स्यात्प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छाया अनुमितित्वप्रकारकत्वाभावादितिभावः। तल्लिङ्गकत्वप्रवेशस्य फलमाह एवमित्यादिना धूमपरामर्शसत्त्वे वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति परामर्शसत्त्व इत्यर्थः। नानुमितिरिति इच्छायास्तत्तद्व्यक्तित्वेनोत्तेजकतया धूमपरामर्शकालीनाया आलोकेन वह्निमनुमिनुयामितीच्छाव्यक्तेरनुत्तेजकत्वादितिभावः। विशिष्यैवेति पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकता वक्तव्येत्यर्थः। तत्प्रयोजनमाह—तेनेति। अनुमितेः पर्वतो वह्निमानित्यनुमितेरित्यर्थः। न विरोध इति पर्वतस्तेजस्वीत्यादि सिद्धेः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालित्वाभावादितिभावः।

मितेर्दर्शनात्पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका, पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि । इदं तु बोध्यम् । यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमान् अयमिति ज्ञानं तत्रासत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति न त्वनुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासादिवत्स्वातन्त्र्येण प्रतिबन्धिका । एवं परामर्शानन्तरं विनापि प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका ॥ ७० ॥

---

**अनुमितेर्दर्शनादिति** अयं पर्वतो वह्निमानित्यादिसिद्धिसत्त्वेऽपि पर्वतो वह्निमानित्याद्यनुमितेरनुभवसिद्धत्वादित्यर्थः । **पक्षतावच्छेदकावच्छेदेनानुमितिं प्रतीति** पर्वतो वह्निमानित्याद्यनुमितिं प्रतीत्यर्थः । **पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेवेति** पर्वतो वह्निमानित्याद्याकारिका सिद्धिरेवेत्यर्थः । एवकारेण च पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिव्यवच्छेदः । **पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति त्विति** अयं पर्वतो वह्निमानित्याद्यनुमितिं प्रतीत्यर्थः । **सिद्धिमात्रमिति** पक्षविशेष्यकसाध्यप्रकारकनिश्चयत्वेन विरोधित्वमित्यर्थः । **स्वातन्त्र्येणेति** यथा कामिनीजिज्ञासा स्वातन्त्र्येण प्रतिबन्धिका भवत्येवं पूर्वोक्ता प्रत्यक्षसामग्र्यपि स्वतन्त्रतयैव प्रतिबन्धिका, न तु पक्षताकुक्षिप्रविष्टतयेत्यर्थः । नन्वनुमितिं प्रति प्रत्यक्षसामग्र्याः स्वातन्त्र्येण प्रतिबन्धकत्वे भिन्नविषयेऽपि प्रत्यक्षसामग्रीकालेऽनुमितिर्न स्यादत आह **एवमिति** । **अनुमितिसामग्रीति** अनुमितिसामग्र्येव प्रतिबन्धिकेत्यर्थः । न तु भिन्नविषये प्रत्यक्षसामग्र्यनुमितौ प्रतिबन्धिकेतिभावः । तथा च प्रत्यक्षसामग्र्या समानविषयकानुमितावेव प्रतिबन्धकत्वमिति न पूर्वोक्तानुमित्यनुपपत्तिरिति शम् ॥ ७० इति पक्षता निरूपणम् ॥

हेतुप्रसङ्गाद्धेत्वाभासान्विभजते—

**अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।**
**कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥**
**आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।**
**तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥ ७२ ॥**

तल्लक्षणं तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं, तत्त्वम् । तथाहि व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः यद्विषयकत्वं च यादृशविशिष्टविषयकत्वं बोध्यम् । तेन बाधभ्रमस्यानुमिति-

---

हेत्वाभासनिरूपणे प्रसङ्गसङ्गतिं दर्शयति **हेतुप्रसङ्गादिति** तत्त्वनिर्णयविजयलक्षणैककार्यकारित्वमप्यत्र सङ्गतिर्बोध्या । तद्धर्म्मावान्तरधर्म्मप्रकारकज्ञानविषयकेच्छां प्रति तद्धर्म्मज्ञानस्य हेतुत्वात् हेत्वाभासत्वरूपसाधारणधर्म्मज्ञानं विना विभागोऽनुचित इत्यत आह—**तल्लक्षणं त्विति** हेतोराभासा दोषा इति व्युत्पत्त्या दोषलक्षणं त्वित्यर्थः । अत्र यद्यपि मूले दुष्टहेतूनां विभजनाद्धेतुवदाभासन्त इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वाद् दुष्टहेतुलक्षणमेव वक्तव्यं तथापि दोषज्ञाने जाते दोषवत्त्वरूपदुष्टलक्षणस्य ज्ञातुं शक्यत्वान्न दोष इति ध्येयम् । **यद्विषयकत्वेनेति** यो विषयो यस्य स यद्विषयकस्तस्य भावस्तत्त्वं तेन, तथा च ज्ञाननिष्ठं यद्विषयकत्वमनुमितिप्रतिबन्धकतावच्छेदकं तत्त्वं दोषत्वमित्यर्थः । ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदविषयकत्वेन **ज्ञानस्य** ह्रदो वह्न्यभाववानितिज्ञानस्यानुमितिविरोधित्वं ह्रदो वह्निमानित्यनुमितिविरोधित्वं भवतीति वह्न्यभाववान्ह्रदो दोष इत्येवं सर्वत्र लक्षणसमन्वयो बोध्यः । लक्ष्ये लक्षणमेव ग्राहयति **तथाहीति** ते व्यभिचारादयः ननु वह्न्यभावप्रकारकपर्वतविशेष्यकनिर्णयत्वेन वह्न्यभाववान्पर्वत इति भ्रमस्यापि पर्वतविशेष्यकवह्न्यभावप्रकारकानुमितिविरोधित्वमस्तीति वह्न्यभावेऽतिव्याप्तिः स्यादत आह **यद्विषयकत्व चेति** एतद्विशेषणप्रयोजनमाह—**तेनेति** ।

विरोधित्वेऽपि न क्षतिः। तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः। न च वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात्, तत्र वह्न्यभावव्याप्यवान्पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम्, इष्टापत्तेः। अन्यथा बाधस्यानित्यदोषत्वापत्तेः तस्मात्तत्र वह्न्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वम् भ्रमादनुमितिप्रतिबन्धमात्रं, हेतुस्तु न दुष्टः। इत्थं च साध्याभाववद्वृत्तिहेत्वादिकं दोषः। तद्वत्त्वं च हेतौ येन केनापि संबन्धेनेति नव्याः। परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वम्। सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा। तद्वत्त्वं च हेतोर्ज्ञानरूपसंबन्धेन। न चैवं वह्निमान् धूमा-

---

बाधभ्रमस्य पर्वतो वह्न्यभाववानिति भ्रमस्य, न क्षतिर्न वह्न्यभावेऽतिव्याप्तिरित्यर्थः; अन्यथा वह्न्यभावविषयकत्वस्य पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतावच्छेदककुक्षिप्रविष्टत्वात्तत्रातिव्याप्तिः स्यादितिभावः। यादृशविशिष्टेति विवक्षणे तु न तत्रातिव्याप्तिरित्याह **तत्रेत्यादिना**। सत्प्रतिपक्षादेर्नित्यदोषत्ववादी शङ्कते न चेति। आभासत्वं दोषत्वमित्यर्थः। **विशिष्टस्याप्रसिद्धत्वादिति** पाषाणमयत्वे वह्न्यभावव्याप्यत्वाभावादितिभावः। **इष्टापत्तेरिति** सद्धेतूनां प्रतिपरामर्शसत्त्वेऽपि न दुष्टत्वं सम्भवतीतिभावः, **अन्यथा** प्रतिपरामर्शसत्त्वदशायां सद्धेतोरपि दुष्टत्वस्वीकारे **अनित्यदोषत्वापत्तेरिति** पक्षे साध्याभावभ्रमदशायां सद्धेतोरपि बाधितत्वापत्तेरित्यर्थः। **इत्थं च** यादृशविशिष्टविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तादृशविशिष्टस्य दोषत्वे चेत्यर्थः। हेत्वादिकमित्यादिना साध्याभावविशिष्टपक्षपरिग्रहः। ननु साध्याभाववद्वृत्तित्वविशिष्टस्य हेतोर्दोषत्वे तद्वत्त्वस्य हेतावभावाद्धेतौ दुष्टत्वव्यवहारो न स्यादत आह—**तद्वत्त्वं चेति**। सत्प्रतिपक्षादेरनित्यदोषत्ववादिनां मतमाह—**परे त्वित्यादिना**। **ज्ञानरूपसम्बन्धेनेति** एकज्ञानविषयत्वरूपहेतुतावच्छेदकत्वसम्बन्धेनेत्यर्थः। बाधभ्रमस्य पर्वतो वह्न्यभाववानित्यादिरूपस्य अनुमितिविरोधित्वात्पर्वतो वह्निमानित्याद्यनु-

दित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाज्ज्ञानरूपसंबन्धेन तद्धत्त्वस्यापि सत्त्वात्सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यं, तत्र ज्ञानस्य संबन्धत्वाकल्पनात् । अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात् । तत्र बाधित इति व्यवहाराभावादित्याहुः । अनुमितिविरोधित्वं च अनुमितितत्करणान्यतरविरोधित्वम् । तेन व्यभिचारिणि नाव्याप्तिः दोषज्ञानं च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकं तेनैकहेतौ व्यभिचारग्रहे हेत्वन्तरेणानुमित्युत्पत्तेस्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्याप्रकृतानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः । यादृशपक्षसाध्यहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् । पञ्चत्वकथनं तु तत्संभव-

---

मितिविरोधित्वादित्यर्थः । **तद्धत्त्वस्यापि** साध्याभाववत्त्वस्यापि । **सद्धेतोरपि** पर्वतपक्षकवह्निसाध्यकधूमादिहेतोरपीत्यर्थः । **तत्र** बाधभ्रमकालीने धूमादिसद्धेतौ । ननु सत्प्रतिपक्षभ्रमदशायां ज्ञानस्य सम्बन्धत्वं कल्प्यते बाधभ्रमदशायां तु न कल्प्यत इत्यत्र किं विनिगमकमित्यत आह **अत्रेति** । सत्प्रतिपक्षभ्रमकालीने सद्धेतौ **तत्कल्पनात्** ज्ञानस्य सम्बन्धत्वकल्पनादित्यर्थः । **तत्र** बाधभ्रमकालीने सद्धेतौ । एतादृशव्यवहारयोः स्वानुभवमात्रसाक्षिकत्वमित्यस्वरस आहुरित्यनेन सूचितो बोद्धव्यः । अनुमितिविरोधित्वमित्यस्यानुमितितत्करणान्यतरविरोधित्वविवक्षायाः फलमाह—**तेनेत्यादिना** । ननु पर्वतवृत्तिकांचनमयत्वाभावविषयकत्वेन पर्वते काञ्चनमयत्वं नास्तीति ज्ञानस्य काञ्चनमयपर्वतो वह्निमानित्यनुमितिविरोधित्वात्पर्वतो वह्निमान्धूमादित्यादावपि पर्वतादेः काञ्चनमयत्वाभावो हेत्वाभासः स्यादतस्तद्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतुकानुमितितत्कारणज्ञानान्यतरविरोधित्वमवश्यं लक्षणे निवेशनीयं, एवं च सति निर्वह्निः पर्वतो वह्निमानित्यादौ न कोऽपि हेत्वाभासः स्यात्तादृशानुमितेरप्रसिद्धेरत आह—**यादृशसाध्येति** तथा च तादृशानुमितेरप्रसिद्धावपि न क्षतिः **सम्भवस्थलेति**

स्थलाभिप्रायेण । एवं च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम् । साधारणः साध्यवदन्यवृत्तिर्हेतुः । तेन च व्याप्तिग्रहप्रतिबन्धः क्रियते । असाधारणः साध्यसमानाधिकरणो हेतुः । तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते । तथा शब्दो नित्यः शब्दत्वादित्यादावसाधारण्यं, शब्दोऽनित्यः शब्दत्वादित्यादौ त्वसाधारण्यभ्रमः । अन्ये तु सपक्षावृत्तिरसाधारणः । सपक्षश्च निश्चितसाध्यवान् । इत्थं च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यं तत्र हेतुनिश्चयादिति वदन्ति । अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः । अनेन च व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते । विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी । अयं साध्याभावग्रहसामग्रीत्वेन

---

वायुर्गन्धवान्स्नेहादित्यादौ पञ्चहेत्वाभाससम्भव इति भावः । हेत्वाभासलक्षणमुक्त्वा मूले प्राचीनाभिप्रायेण वक्ष्यमाणान्यप्यनैकान्तिकादिलक्षणानि नवीनाभिप्रायेणाह—**एवमिति** । **साधारणाद्यन्यतमत्वमिति** साधारणभिन्नत्वे सत्यसाधारणभिन्नत्वे सत्यनुपसंहारिभिन्नो यस्तद्भिन्नत्वमित्यर्थः । नन्वेतस्य कथं हेत्वाभासत्वमत आह—**तेन चेति** क्रियत इति व्याप्तिघटकीभूतसाध्यवदन्यावृत्तित्वांशे साध्यवदन्यवृत्तित्वज्ञानस्य प्रतिबन्धकत्वादितिभावः । **साध्यसामानाधिकरण्यग्रह इति** व्याप्तिघटकीभूत इति शेषः । प्राचीनमतमाह **अन्ये त्विति** असिद्धत्वात्सपक्षं प्रकटयति **सपक्षश्चेति** असाधारणस्यानित्यदोषतां दर्शयति **इत्थं चेति** असाधारण्यघटकीभूतस्य सपक्षत्वस्य निश्चयघटकत्वे चेत्यर्थः । **तत्र** निश्चितसाध्यवति पक्षे । अत्र निश्चितसाध्यवदवृत्तित्वज्ञानस्य साध्यसामानाधिकरण्यज्ञाने प्रतिबन्धकत्वाभावेन दूषकताबीजस्याभावात् साधारणस्य हेत्वाभासत्वानुपपत्तिरित्यस्वरसो वदन्तीत्यनेन सूचितो बोद्धव्यः **व्यतिरेकव्याप्तिग्रहप्रतिबन्धः क्रियत इति** तथा च साधारणासाधारणानुपसंहारिणां व्याप्तिज्ञानप्रतिबन्धकतारूपदूषकताबीजस्यैक्यादेकहेत्वाभासत्वमितिबोध्यम् । **साध्यव्यापकीभूताभावेति**...

प्रतिबन्धकः । सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः । अत्र तु हेतुरेक एवेति विशेषः । साध्याभावसाधक एव हेतुः साध्यसाधकत्वेनोपन्यस्त इति अशक्तिविशेषोपस्थापकत्वाच्च विशेषः । सत्प्रतिपक्षः साध्याभावव्याप्यवान्पक्षः । अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिकालीनागृहीताप्रामाण्यकसाध्याभावव्याप्यवत्त्वोपस्थितिविषयस्तथेत्यन्ये । अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम् । अत्र केचित् । यथा घटाभावव्याप्यवत्ताज्ञाने विद्यमानेऽपि घटचक्षुःसंयोगे सति घटवत्ता-

---

साध्यव्यापकीभूतो यो॰भावस्तत्प्रतियोगीत्यर्थः । यथा शब्दो नित्यः कार्यत्वादित्यत्र साध्यं नित्यत्वं तद्व्यापकीभूताभावः कार्यत्वाभावस्तत्प्रतियोगी कार्यत्वमिति लक्षणसमन्वयः । साध्याभावग्रहसामग्रीत्वेनेति । ननु यदि विरुद्धः साध्याभावसामग्रीत्वेन प्रतिबन्धकस्तदा साध्याभावसाधकात्सत्प्रतिपक्षाद्विरुद्धस्य भेदो न स्यादुभयोरपि दूषकताबीजस्यैक्यादत आह सत्प्रतिपक्ष इति । प्रतिहेतुः द्वितीयो हेतुरित्यर्थः । ननु यदि दूषकताबीजस्यैक्येऽपि हेतुभेदाभेदप्रयुक्त एव विरुद्धसत्प्रतिपक्षयोर्भेदस्तदान्वयव्याप्तिमता हेत्वन्तरेण यत्रानुमितिप्रतिरोधस्तत्र सत्प्रतिपक्षत्वं, यत्र च व्यतिरेकव्याप्तिमता हेतुना व्याप्तिप्रतिरोधस्तत्र तु हेत्वाभासान्तरं स्यादतो भेदकान्तरमाह साध्याभावेति तथा चाशक्तिसूचकत्वमेव सत्प्रतिपक्षाद्विरोधभेदसाधकं दूषकताबीजमिति भावः । प्राचीनमते सत्प्रतिपक्षलक्षणमाह अगृहीतेति अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितेः कालीना या अगृहीताप्रामाण्यकसाध्याभावव्याप्यवत्त्वोपस्थिति स्तस्या विषय इत्यर्थः । नित्यत्वव्याप्यशब्दत्ववान् शब्द इति ज्ञानकाले नित्यत्वाभावानित्यत्वव्याप्यकार्यत्ववान्शब्द इति ज्ञानविषयत्वाच्छब्दः सत्प्रतिपक्षः ज्ञानरूपसम्बन्धेन तद्वत्वाच्च पूर्वोक्तं हेतुद्वयं सत्प्रतिपक्षितमित्येवं लक्षणसमन्वयः । सत्प्रतिपक्षस्य दूषकताबीजं दर्शयति अत्र चेति । रत्नकोशकारमतं दूषयितुमुपन्यस्यति अत्र केचिदिति । अनुमितिर्भवत्येवेति

ज्ञानं जायते। यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीर्जायते। एवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति। तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव। यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः। फलबलेन चाधिकबलसमबलभावः कल्प्यत इति वदन्ति। तन्न। तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयाल्लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवात्। न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता गौरवात्। तथा च प्रतिबन्धकसत्त्वात्कथमनुमितिः। नहि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी, येनानुमितिभिन्नत्वेनापि विशेषणीयम्। यत्र च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात्संशयो नान्यथाऽगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति। असिद्धिस्त्वाश्रयासिद्ध्याद्यन्यतमत्वम्,

---

अनुमितिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावेन तत्तदभावानुमितिसामग्रीभ्यां तत्तदभावकोटिकसंशयानुमितेरुत्पत्तेश्चेतिभावः। तस्य तदभावव्याप्यवत्ताज्ञानस्य। ज्ञानमात्रे तादृशज्ञानत्वावच्छिन्ने उपनीतभानविशेषे ज्ञानलक्षणाप्रत्यासत्तिजन्यज्ञान इत्यर्थः। गौरवात्कार्यकारणभावद्वयकल्पने गौरवादितिभावः। कथमनुमितिरिति अनुमितेरपि तत्प्रतिबध्यतावच्छेदकाक्रान्तत्वादितिभावः। ननु लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यानुमितिभिन्नज्ञानत्वावच्छिन्नं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वमित्येवमेव प्रतिबध्यप्रतिबन्धकभावो वक्तव्य इत्यत आह न हीति। ननु कथं तर्ह्युभयव्याप्यवत्तानिश्चयात्प्रात्यक्षिकः संशय इत्याशङ्क्य प्रामाण्यज्ञानं विना न भवत्येवेत्याह—यत्र चेति। आश्रयासिद्धीत्यादिना स्वरूपासिद्धिव्याप्यत्वासिद्ध्योः परिग्रहः। आश्रयासिद्ध्यादीनां लक्षणप्रदर्शनपूर्वकं दूषकताबीजं

आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः। यत्र च काञ्चनमयः पर्वतो वह्निमानिति साध्यते तत्र पर्वतो न काञ्चनमय इतिज्ञाने विद्यमाने काञ्चनमये पर्वते परामर्शप्रतिबन्धः फलम्। स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्य हेतोरभावः। अत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम्। साध्याप्रसिद्धिरपि व्याप्यत्वासिद्धिः। सा च साध्ये साध्यतावच्छेदकस्याभावः तथा च काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम्। एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः। यथा च काञ्चनमयधूमादित्यादौ, अत्र हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम्। एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वं हेतुतानवच्छेदकमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति। बाधस्तु पक्षे साध्याभावादिः। एतस्यानुमितिप्रतिबन्धः फलम्। तद्धर्मिकतदभावनिश्चयो लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतद्धर्मि-

---

दर्शयति **आश्रयासिद्धिरित्यादिना**। साध्याप्रसिद्ध्यादीनामाधिक्यं निराकरोति **साध्याप्रसिद्ध्यादयस्त्विति**। केषांचिन्मतमाह **एवं वह्निमानित्यादिना** नीलधूमत्वावच्छेदेनापि नीलधूमे वह्निव्याप्तिसत्त्वात्कथं व्याप्यत्वासिद्धिरित्यस्वरसः वदन्तीत्यनेन सूचितो बोद्धव्यः। साध्याभावादिरित्यादिना साध्याभावविशिष्टपक्षादेः परिग्रहः। **तद्धर्मिकतदभावनिश्चय इति** अप्रामाण्यज्ञानानास्कन्दितानाहार्यतद्धर्मिकतदभावनिश्चय इत्यर्थः। भूतलादौ घटाभावादिज्ञानसत्त्वेऽपि घटचक्षुःसंयोगाद्घटादिविशिष्टबुद्ध्युदयादाह—**लौकिकसन्निकर्षाजन्येति**। शंखो न पीत इति निश्चयसत्त्वेऽपि पित्तदोषात्पीतः शंख इति भ्रमोदयात्तत्र व्यभिचारवारणायाह—**दोषविशेषेति**। दोषसामान्यजन्यत्वानिवेशे तु भ्रममात्रस्यैव बाधाप्रतिबध्यत्वापत्तिरतो **विशेषेति**। पक्षः साध्यवान्न वेति संशयस्य पक्षः

ज्ञानमनुमितिकारणं तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम् । अप्रसिद्धसाध्यकानुमित्यनापत्तेः, साध्यसंशयादिकं विनाऽप्यनुमित्युत्पत्तेश्च ॥ एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं प्रमाणाभावाद्गौरवाच्च । अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः । किंतु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता, तत्र भ्रमत्वशङ्काविघटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते । न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः, पक्षे हेत्वभावे तु स्वरूपासिद्धिरेव दोष इति वाच्यं,

---

साध्यवानिति निश्चयस्य वानुमितिकारणत्वमित्यादिमतं दूषयति—न त्विति । तद्विरोधितयेति अनुमितिकारणीभूतस्य संशयसाधारणस्य पक्षे साध्यसंसृष्टत्वज्ञानस्य विरोधितयेत्यर्थः । अप्रसिद्धसाध्यकेति पृथिवी इतरभिन्ना, गन्धवत्त्वादित्याद्यनुमित्यनापत्तेरित्यर्थः । तत्र साध्यस्य पृथ्वीतरभेदस्यानुमितेः पूर्वमप्रसिद्धत्वादितिभावः । ननु व्यतिरेकसहचारेणाप्यन्वयव्याप्तिरेव गृह्यत इत्याचार्याणां मते सर्वत्रान्वयव्याप्तिज्ञानस्यैवानुमितिकारणत्वमन्वयव्याप्तेश्च साध्यघटकस्वरूपत्वेन व्याप्तिज्ञानकाल एव साध्यज्ञानस्यावश्यकत्वादप्रसिद्धसाध्यकानुमितिः कुत्रापि न भवत्येवेत्यत आह—साध्यसंशयेति । पक्षविशेष्यकसाध्याभावप्रकारकज्ञाने प्रमात्वनिश्चयोऽनुमितिप्रतिबन्धकस्तदभावः कारणमतः पक्षविशेष्यकसाध्याभावप्रकारकज्ञानवृत्तिप्रमात्वमेव बाध इति प्राचीनमतं दूषयति एवमिति । प्रमात्वज्ञानमपि प्रमात्वनिश्चयोऽपीत्यर्थः । मानाभावादिति ग्राह्याभावानवगाहिसाध्याभावज्ञाननिष्ठप्रमात्वनिश्चयस्य विरोधित्वे मानाभावादित्यर्थः । गौरवाच्चेति संशयनिश्चयसाधारणाप्रामाण्यज्ञानाभाव एव प्रतिबन्धककोटौ निवेश्यते लाघवान्नतु पूर्वोक्तज्ञानप्रमात्वनिश्चयत्वेन प्रतिबन्धकत्वं गौरवात् । नन्वप्रामाण्यज्ञानानास्कन्दितबाधबुद्धेः प्रतिबन्धकत्वापेक्षया प्रथमोपस्थितत्वात् प्रमात्वनिश्चयस्यैव प्रतिबन्धकत्वं स्यादत आह—अन्यथेति । स्वसिद्धान्तं दर्शयति किंत्विति । भेदादिति बाधज्ञानस्य व्यभिचारादिविषयकत्वाभावेन

बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात् । किं च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिंचित्करत्वाद्बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम् । एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम् । न च पक्षे घटे गन्धसत्त्वात्कथं बाध इति वाच्यं, पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति । बाधसत्प्रतिपक्षभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति । अन्यथा हेत्वाभासाधिक्यप्रसङ्गात् । बाधव्याप्यसत्प्रतिपक्षस्तु भिन्न एव, स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात् । सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः ॥७१॥७२॥

**यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।**

यः सपक्ष इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षो निश्चितसाध्यवान् । विपक्षः साध्याभाववान् । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् । वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्, विरुद्धस्य साधा-

---

हेत्वाभासान्तरत्वमितिभावः। ननु बाधज्ञानस्यापि व्यभिचारादिविषयकत्वमेवास्त्वित्यत आह—**किं चेति**। **अकिञ्चित्करत्वादिति** व्यभिचारज्ञानस्यानुमितिं प्रत्यप्रतिबन्धकत्वेन व्याप्तिज्ञानादेश्च पूर्वमुत्पन्नत्वात्परामर्शानन्तरमुत्पन्नस्य व्यभिचारज्ञानस्याकिञ्चित्करत्वमिति तत्र बाधबुद्धिरेव प्रतिबन्धिकेति भावः। व्यभिचाराद्यसङ्कीर्णमपि बाधं दर्शयति—**एवमिति** । **बाधस्यैवेति** तत्र व्यभिचारस्य स्वरूपासिद्धेश्चाभावादितिभावः। **बाधतद्व्याप्येति** बाधः पक्षे साध्याभावादिस्तद्व्याप्यः सत्प्रतिपक्षस्तद्भिन्ना ये व्यभिचारादयस्तद्व्याप्यानामपि तत्रैवान्तर्भाव इत्यर्थः। व्यभिचारादेरिव व्यभिचारव्याप्यस्यापि व्याप्तिज्ञानप्रतिबन्धकज्ञानविषयत्वान्न तस्यातिरिक्तहेत्वाभासत्वमितिभावः । नन्वेवं सत्प्रतिपक्षस्यापि बाध एवान्तर्भावः स्यादत आह—**स्वतन्त्रेच्छस्येति** । **न प्रतिबन्धक इति** साध्याभावव्याप्यव्याप्यवत्ताज्ञानस्यानुमितिं प्रति विरोधित्वे मानाभावादिति भावः । **प्रघट्टकार्थः** समुदायार्थ इत्यर्थः ॥ ७१–७२ ॥

रणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य पार्थक्यात् ॥

**यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः ॥७३॥**

यस्तूभयस्मादिति । सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः साध्यवत्तया निश्चितः । विपक्षः साध्यशून्यतया निश्चितः । शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसन्देहस्तदा सपक्षत्वं घटादीनामेव, तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् । यदा तु शब्देऽनित्यत्वनिश्चयस्तदा नासाधारणः । इदं च प्राचां मतम् । नवीनमतं तु पूर्वमुक्तम् ॥ ७३ ॥

**तथैवानुपसंहारी केवलान्वयिपक्षकः ।**

तथैवेति । केवलान्वयिपक्षक इति । केवलान्वयिधर्मावच्छिन्नपक्षक इत्यर्थः । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात्सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः। इदं तु न सम्यक्, पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् । अस्तु वा सहचाराग्रहस्तात्रताप्य-

---

दूषकताबीजस्य भिन्नतयेति साधारणस्य साध्याभाववद्वृत्तित्वांशग्रहे विरुद्धस्य च सामानाधिकरण्यांशग्रहे प्रतिबन्धकत्वादितिभावः । पूर्वमुक्तमिति साधारणः साध्यासमानाधिकरणो हेतुरित्यादिनोक्तमित्यर्थः ॥ ७३ ॥

केवलान्वयिपक्षक इत्यत्र पक्षता साध्यसंशयरूपा विवक्षितेति बोद्धव्यम् । क्षतेरभावादिति सर्वत्वावच्छेदेन साध्यसंशयेऽपि घटत्वावच्छेदेन साध्यनिश्चयस्य सम्भवादिति भावः । तस्य सहचाराग्रहस्येत्यर्थः । तस्य स्वरूपत एव विरोधित्वेन तद्ज्ञानस्यानुमितिविरोधित्वस्वीकारे प्रयोजनाभावा-

ज्ञानरूपासिद्धिरेव न तु हेत्वाभासत्वं तस्य, तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् ॥

**यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥७४॥**

यः साध्यवतीति । एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः । तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥७४॥

**आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ ।**
**व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥७५॥**
**पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।**
**ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥**
**व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।**

असिद्धिं विभजते । आश्रयासिद्धिरित्यादि । पक्षासिद्धिरिति । आश्रयासिद्धिरित्यर्थः । अपरेति । स्वरूपासिद्धिरित्यर्थः । नीलधूमादिक इति । नीलधूमत्वं गुरुतया न हेतुतावच्छेदकं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् । धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति ॥

**विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥**

विरुद्धयोरिति । कपिसंयोगतदभावव्याप्यवत्तापरामर्शेऽपि न सत्प्रतिपक्षत्वमत उक्तं—विरुद्धयोरिति । तथा च स्वसाध्य-

---

दितिभावः । **तदर्थ इति** यः साध्यवति नैवास्तीति मूलस्यार्थ इत्यर्थः ॥७४॥

**स्वसमानाधिकरणेति** स्वं व्याप्यतावच्छेदकत्वेन संदिग्धं नीलधूमत्वादिकं तत्समानाधिकरणव्याप्यतावच्छेदकधर्मान्तरेणाघटितस्यैवेत्यर्थः । **धूमप्रागभावत्वसंग्रहायेति** धूमप्रागभावत्वस्य व्याप्यतावच्छेदकीभूतधूमत्वघटितत्वेन संग्रहो न स्यादतः स्वसमानाधिकरणपदस्योपादानमितिभावः । **स्वसाध्येति** स्वं

सत्प्रतिपक्षत्वेनाभिमतो विरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥ ७५ ७६ ७७ ॥

**साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।**
**उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥**

साध्यशून्य इति । पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः । तेन घटे गन्धसत्त्वेऽपि न क्षतिः । एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥ ७८ ॥

॥ इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यामनुमानखण्डम् ॥

उपमितिं व्युत्पादयति—

**ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।**
**सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥७९॥**
**वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।**

---

हेतुस्तत्साध्यविरुद्धो यः साध्याभावस्तद्व्याप्यवत्तापरामर्शकालीनो यः साध्यव्याप्यवत्तापरामर्शस्तद्विषय इत्यर्थः । ननूत्पत्तिकालीनेत्यादिमूलमयुक्तं पक्षे घटे गन्धसत्त्वादित्यत आह—**पक्षतावच्छेदकेति** । मूलस्य न्यूनतां परिहरति—**एवमिति** ॥ ७५—७६—७७—७८—॥

इति श्री—पं—गोविन्दरामसूनुवंशीधरशर्मविरचितायां मुक्तावल्यन्वयार्थदीपिकायामनुमानखण्डं समाप्तम् ॥



## ॥ अथोपमानखण्डः ॥

अवसरसङ्गतिमभिप्रेत्योपमानखण्डः प्रारभ्यते **उपमितीति** । गवयान्तरं

**गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥ ८० ॥**

यत्रारण्यकेन केनचिद्ग्रामीणं प्रत्युक्तं गोसदृशो गवयपदवाच्य इति। पश्चाद्ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यज्ञानं यज्जातं तदुपमितिकरणम् । तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः। तदनन्तरं तत्र गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिः, न त्वयं गवयपदवाच्य इत्युपमितिः, गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ॥७९॥८०॥

॥ इति श्रीविश्वनाथन्यायपञ्चानन भट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यामुपमानखण्डम् ॥

---

शाब्दबोधप्रकारं दर्शयति—

**पदज्ञानं तु करणं, द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥८१॥**

पदज्ञानं त्विति। न तु ज्ञायमानं पदं करणं तदभावेऽपि मौनिश्लोकादौ शाब्दबोधात् । पदार्थधीरिति। पदजन्यपदार्थस्मरणं

---

**शक्तिग्रहाभावप्रसङ्गादिति** इदन्त्वावच्छिन्ने शक्तिज्ञानस्वीकारे तु गवयत्वावच्छिन्नस्य शाब्दबोधाभावप्रसङ्गः स्यादिति भावः।

इति श्रीपण्डितगोविन्दरामसूनुवंशीधरशर्मविरचितायामन्वयार्थदीपिकायामुपमानखण्डः समाप्तः ।

---

## अथ शब्दखण्डः

उपजीव्योपजीवकभावसंगत्या शब्दखण्डः प्रारभ्यते **शाब्दबोधप्रकारं दर्शयतीति** पदज्ञानं त्विति मूलस्थस्य तुशब्दस्यैवकारार्थकत्वं स्पष्टयति **न त्विति** । **तदभावेऽपि** पदाभावेऽपीत्यर्थः । मौनिश्लोकादावित्यत्रादिना अकारादिबोधकविजातीयहस्तक्रियादेः परिग्रहः । **पदजन्यपदार्थस्मरणमिति** पदज्ञानजन्यपदार्थ-

व्यापारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्। अन्यथा घटादिपदात्समवायसंबन्धेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिश्च शक्तिलक्षणान्यतरः संबन्धः। अत्रैव शक्तिज्ञानस्योपयोगः। पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्संबन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य च एकसंबन्धिज्ञानविधयार्थस्मारकत्वम्। शक्तिश्च पदेन सह पदार्थस्य संबन्धः। स चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा-

---

स्मरणमित्यर्थः। **अन्यथा** पदार्थज्ञानमात्रस्य व्यापारत्वे। **तत्रापि** पदजन्यपदार्थोपस्थितावपि। **अत्रैव** पदजन्यपदार्थोपस्थितावेव। अयमाशयः पदपदार्थयोर्वृत्तिरूपसम्बन्धज्ञाने सत्येवैकसम्बन्धिज्ञानमपरसंबन्धिस्मारकमितिरीत्या पदार्थोपस्थितिः संभवति हस्तिहस्तिपकयोः सम्बन्धज्ञाने सत्येव हस्तिपकदर्शनेऽपि हस्तिस्मरणवन्नतु पदज्ञानमात्रे इति सम्बन्धज्ञानस्य सम्बन्धिज्ञानसहकारित्वमावश्यकमिति॥ पदपदार्थयोः सम्बन्धरूपायाः शक्तेः स्वरूपं दर्शयति **शक्तिश्चेति**। **स चेति** नन्वीश्वरस्यानेकेच्छाकल्पने गौरवाद् घटपदाद् घटो बोद्धव्यः पटपदात्पटो बोद्धव्य इत्यादिसमूहालम्बनरूपैकेच्छाव्यक्तिरेव सिद्धान्तसिद्धा, तथाच घटपदबोध्यत्वप्रकारकेश्वरेच्छाया घटपदशक्तित्वस्वीकारे तस्या विशेष्यतासम्बन्धेन पटेऽपि सत्वाद् घटपदस्य पटेऽपि शक्तिरस्तीत्यतिप्रसंगः स्यादिति चेन्न, घटपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छाया एव घटपदशक्तित्वस्वीकारात्, तथा च घटपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वस्य घटपदशक्तित्वस्वीकारान्न पटादावतिप्रसङ्गः संभवति घटपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः पटादावभावादन्यथा तद्भाववति तत्प्रकारकत्वेनेश्वरेच्छाया विसंवादित्वापत्तेः, एवमन्यत्रापि बोध्यं। न चैवमपि गङ्गादिपदात्तीरादिबोधस्यापि सम्भवाद् गङ्गादिपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वं तीरादावप्यवश्यं स्वीकर्त-

**रूपः । आधुनिके नाम्नि शक्तिरस्त्येव । एकादशेऽहनि पिता नाम कुर्यादितीश्वरेच्छायाः सत्त्वात् । आधुनिकसङ्केतिते तु न शक्तिरिति संप्रदायः । नव्यास्तु ईश्वरेच्छा न शक्तिः, किंत्विच्छैव तेनाधुनिकसंकेतितेऽपि शक्तिरस्त्येवेत्याहुः । शक्तिग्रहस्तु व्याकरणादितः । तथा हि शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥**

**धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति । क्वचित्सति**

---

व्यमन्यथा गङ्गादिपदात्तीरादिबोधोऽपि न स्याद्भगवदिच्छां विना तदनुपपत्तेः, एवं च सति लक्षणोच्छेदापत्तिः स्यात्तीरादेरपि शक्त्यैव बोधसम्भवादिति वाच्यं, गङ्गापदवाच्यत्वव्यवहाराभावेनेश्वरेच्छायां विषयतया गङ्गापदजन्यबोधो भवतु तीरं विषयतावद्भवत्वेतद्रूपता स्वीक्रियते न तु गङ्गापदजन्यबोधविषयो भवतु तीरमित्याकारतापीति न गङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन भगवदिच्छायास्तीरादावस्तित्वमस्तीति न लक्षणोच्छेदापत्तिः, लक्षणां विना तीरबोधस्यासंभवादित्यन्यत्र विस्तरः **आधुनिके नाम्नि** आधुनिकैः पित्रादिभिः संकेतिते देवदत्तादिनाम्नि, **ईश्वरेच्छायाः सत्त्वादिति** एकादशाहकालीनपित्रुच्चरितशब्दजन्यबोधविषयः पित्रादिसङ्केतितविशेष्यो भवत्वित्येतत्सामान्यरूपेणेश्वरेच्छायाः सत्त्वादित्यर्थः । **आधुनिकसङ्केतिते** नदीवृद्ध्यादिपदे । नन्वाधुनिकसङ्केतिते नद्यादिपदे शक्त्यस्वीकारे नद्यादिपदाच्छाब्दबोधो न स्यादित्याद्यभिप्रायवतां नवीनानां मतमाह—**नव्यास्त्विति** ॥ **धातुप्रकृतिप्रत्ययादीनामिति** धातुरूपायाः प्रकृतेः प्रत्ययादीनाञ्चेत्यर्थः, पाचक इत्यादिप्रातिपदिकानामपि व्याकरणाच्छक्तिग्रहः पचधातोः पाकार्थकस्य तदुत्तरं ण्वुल्प्रत्ययस्य कर्तृत्वार्थकस्य व्याकरणेऽभिधानात् गवादिरूढिपदानां तु कोशादित एव शक्तिग्रहः, अत एव धातुप्रकृतिरित्येतस्य धातुरूपा प्रकृतिरित्येतदेवार्थो युक्तः अन्यथा प्रकृतीत्येतस्योपादानं व्यर्थमेव स्यात् पाचकादिप्रातिपदिकपदानां धातुरूपप्रत्ययरूपावयवयोः शक्त्यैव निर्वाहात्-

बाधके त्यज्यतेऽपि । यथा वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरुच्यते । चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः । तच्च गौरवात्त्यज्यते, किंतु कृतौ शक्तिर्लाघवात् । कृतिश्चैत्रादौ प्रकारीभूय भासते ॥ न च कर्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यं, कर्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात् । संख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः । कर्मत्वादीतयस्येतराविशेषणत्वतात्पर्या-

---

स्यास्तु व्याकरणेनोक्तरीत्या ग्रहसंभवात्, गवादिपदानां तु व्याकरणेन शक्तिनिश्चयाभावादिति धातौ प्रकृतित्वप्रदर्शनं तु प्रत्ययतो वैलक्षण्यद्योतनार्थमेवेत्यत्रधेयम् । लाघवादिति आख्यातस्य कृतौ शक्तिस्वीकारे किञ्चिदनवच्छिन्नस्यैकस्य कृतित्वजातेः शक्यतावच्छेदकत्वे लाघवं कर्तरि शक्तिस्वीकारे तु कृतित्वविशिष्टानामनन्तकृतीनां शक्यतावच्छेदकत्वकल्पने गौरवं, जात्यखण्डोपाध्यतिरिक्तपदार्थानां किञ्चिद्धर्मप्रकारतयैव भानसम्भवादितिभावः । प्रकारीभूयभासत इति तथा च तण्डुलकर्म्मकपाकानुकूलकृतिमांश्चैत्र इति तण्डुलं पचति चैत्र इत्येतस्य बोध इत्यर्थः । तृतीया स्यादिति अनभिहित इत्यधिकारीयेण कर्तृकरणयोस्तृतीयेत्यनेनानभिहितकर्तरि तृतीयाभिधानादिति भावः । तत्र तृतीयायां तन्त्रत्वा प्रयोजकत्वादित्यर्थः । ननु चैत्रस्तण्डुलं पचतीत्यत्र चैत्रगतसंख्यैवाख्यातेनाभिधीयते न तु तण्डुलगतसंख्यापीत्यत्र नियामकं किञ्चिद्वक्तव्यमन्यथा चैत्रेण पच्यते तण्डुल इत्यादावपि चैत्रगतसंख्याया अभिधानसम्भवाच्चैत्रपदोत्तरं तृतीया न स्यादित्याशङ्क्याह—संख्याभिधानेति कर्म्मत्वाद्यनवरुद्धेति कर्म्मत्वाद्यनवरुद्धत्वे सति प्रथमान्तपदोपस्थाप्यत्वमेव संख्याभिधानयोग्यत्वमित्यर्थः । नन्वेवं चैत्र इव मैत्रो गच्छतीत्यत्राख्यातेनोक्तायाः संख्यायाः चैत्रेऽप्यन्वयः स्यात्तस्य कर्म्मत्वाद्यनवरुद्धत्वात्प्रथमान्तपदोपस्थाप्यत्वाच्चेत्यत आह—कर्म्मत्वादित्यस्येति इतराविशेषणेति वस्तुतस्त्वितरस्यात्राविवक्षितत्वं तथाच विशेषणत्वेन तात्पर्याविषयत्वे सति प्रथमान्तपदोपस्थाप्यत्वं संख्याभिधानयोग्यत्वमितिकर्म्मत्वाद्यनवरुद्धः

विषयत्वमर्थः । तेन चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे संख्यान्वयः । यत्र कर्मादौ न विशेषणत्वे तात्पर्यं तद्वारणाय प्रथमान्तेति । यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः । तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणं । स्तोकं पचतीत्यादौ स्तोकादेर्वारणायच द्वितीयदलं । तस्य द्वितीयान्तोपस्थाप्यत्वाद्वारणमिति । एवं व्यापारेऽपि न शक्तिर्गौरवात् ।

---

प्रथमान्तपदोपस्थाप्य इत्यस्यार्थो बोध्य इत्यर्थः । **न चैत्रे संख्यान्वय इति** चैत्रस्य इवार्थे सादृश्ये विशेषणत्वादिति भावः । नन्वविशेषणत्वं प्रकारताशून्यत्वं तथाच खले कपोतन्यायेन यत्र शाब्दबोधस्तत्र शाब्दबोधात्पूर्वं चैत्रेऽपि संख्यान्वयापत्तिस्तदवस्थैवेत्यत उक्तं **तात्पर्याविषयेति** । अत्र यद्यप्यन्ययोगव्यवच्छेदार्थके विशेष्यसङ्गतैवकारे चैत्रस्य विशेषणत्वाच्चैत्र एव पचतीत्यादौ चैत्रे संख्यान्वयोपपत्तिर्न सम्भवति तथापीतराविशेषणत्वेन तात्पर्याविषयत्वे सतीत्यस्य मुख्यविशेष्यत्वाभावे सति विशेषणत्वेन तात्पर्यविषयाद्भिन्नत्वे सतीत्यर्थो बोध्यः । तथाच चैत्र एव गच्छतीत्यादौ चैत्रस्यैवकारार्थेऽन्यस्मिन्विशेषणत्वेऽपि मुख्यविशेष्यत्वस्यापि तत्र सत्वान्न संख्यान्वयानुपपत्तिरित्यन्यत्र विस्तरः ॥ न **विशेषणत्वे तात्पर्यं** न विशेषणत्वमात्रे तात्पर्यमित्यर्थस्तथाच यत्र तण्डुलकर्मकपाकानुकूलव्यापारवांस्तण्डुल इति बोधे तात्पर्यं तत्र तण्डुलेऽपि संख्यान्वयवारणाय प्रथमान्तेत्यादीतिभावः । ननु तण्डुले पचतीत्यत्र यदोक्तबोधे तात्पर्यं तदा तण्डुलेऽपि संख्यान्वयस्येष्टापत्तिरेवेति प्रथमान्तपदोपस्थाप्यत्वमपार्थकमेवेति चेन्न चैत्रेण सुप्यत इत्यादौ धात्वर्थस्वापादौ संख्यान्वयवारणाय प्रथमान्तपदोपस्थाप्यत्वस्यावश्यकत्वात् । द्वितीयदलस्य प्रकारान्तरेण प्रयोजनं दर्शयितुमन्यथाद्वितीयदलार्थमाह- **यद्वेति । तस्य** स्तोकपदस्येत्यर्थः द्वितीयान्तपदोपस्थाप्यत्वात्प्रथमान्तपदोपस्थाप्यत्वाभावादित्यर्थः । लकारसामान्यस्य व्यापारोर्थ इति मीमांसकमतं दूषयति **एवं व्यापारेऽपीति । गौरवादिति** तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वस्य कृतित्वजात्यपेक्षया शक्यतावच्छेदकत्वकल्पने गौरवादिति भावः । उत्तरदेशसंयोगानुकूलक्रियाश्रयो-

रथो गच्छतीत्यादौ तु स्वव्यापारे आश्रयत्वे वा लक्षणा। जानातीत्यादौ तु आश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे निरूढलक्षणा ॥ उपमानाद्यथा शक्तिग्रहस्तथोक्तम् ॥ एवं कोशादपि शक्तिग्रहः सति बाधके क्वचित्त्यज्यते। यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोशेन व्युत्पादिता तथापि लाघवान्नीलादावेव शक्तिः, नीलादिरूपविशिष्टे तु लक्षणेति ॥ एवमाप्तवाक्यादपि यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात्पिकादिपदशक्तिग्रहः ॥ एवं व्यवहारादपि। यथा प्रयोजकवृद्धेन घटमानयेत्युक्तम्। तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः। तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेतिशब्दप्रयोज्यमित्यवधारयति। ततश्च घटं नय गामानयेत्यादावावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति। इत्थं च भूतले नीलो घट इत्यादिशब्दान्न शाब्दबोधः। घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणात्, कार्यताबोधं प्रति च लिङादीनां सामर्थ्यात्तद-

---

रथ इत्येवमेव रथो गच्छतीत्यस्य बोधः नतु तादृशक्रियानुकूलाश्वादिसंयुक्तरज्ज्वादिसंयोगवान् रथ इत्याकारकेऽपीत्यभिप्रायवतां नवीनानां मतमाश्रित्याह—आश्रयत्वे वेति निरूढलक्षणाऽनादिसङ्केतसिद्धा लक्षणा। तथोक्तमिति उपमाननिरूपणावसर इति शेषः। कोशेन व्युत्पादितेति गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीति कोशेन प्रतिपादितेत्यर्थः। लाघवादिति नीलादिमत्त्वापेक्षया नीलत्वजातेर्लघुतया शक्यतावच्छेदकत्वकल्पनमिति भावः। तच्छ्रुत्वा घटमानयेति वाक्यं श्रुत्वेत्यर्थः आवापोद्वापाभ्यां नयनानयनाभ्यां घटादिपदानां कार्य्यान्वितघटादौ शक्तिं गृह्णातीति साक्षात्परंपरया वा कार्य्यत्वान्वितविषयकशाब्दत्वावच्छिन्नं प्रति पदत्वेन कारणत्वमित्येवं कार्य्यकारणभावं गृह्णातीत्यर्थः। नन्वेवं स्वजन्यकार्यत्वोपस्थितिद्वारा कार्यताबोधकलिङ्गादिपदाभावात्कोशादितः शक्तिग्रहो न स्यादिति प्रभाकराक्षेपं तन्मतदूषणेन दूषयितुं तन्मतमुपन्यसति इत्थं चेत्यादिना ॥ तदभावान्न शाब्दबोध इति

भावान्न शाब्दबोधः इत्यपि केचित् । तन्न । प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात् । अत एव 'चैत्र पुत्रस्ते जातः कन्या ते गर्भिणी जाता' इत्यादौ मुखप्रसाद-मुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति। तथा च व्यभिचारात्कार्यान्विते न शक्तिः । न च तत्र तं पश्येत्यादि शब्दान्तरमध्याहार्यं, मानाभावात् । चैत्र ! पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च । इत्थं च लाघवादन्वित-घटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति ॥ एवं वाक्यशेषादपि शक्तिग्रहः । यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घ-शूकविशेषे आर्याणां प्रयोगः कङ्गौ च म्लेच्छानाम्, तत्र हि, अ-थान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति, इति वाक्यशेषा-द्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगः, नानाशक्ति-

---

घटादिपदेषु कार्य्यत्वस्मारकशक्त्यभावेन घटादिपदानां कार्य्यत्वान्वितानुभवं प्रति हेतुत्वेऽपि भूतले नीलो घट इत्यादितो न शाब्दबोधः स्यात् स्मारक-शक्त्या कार्य्यत्वोपस्थापकलिङ्गादिपदाभावादितिभावः ॥ **लाघवेनेति** कार्य्य-त्वान्वितघटशाब्दत्वापेक्षया घटशाब्दत्वस्य कार्यतावच्छेदकत्वे लाघवेनेत्यर्थः अत एव कार्य्यत्वानन्वितशुद्धघटादिविषयकबोधं प्रति पदानां हेतुत्वादेव **तत्कारणत्वेन** सुखदुःखयोः कारणत्वेन **तद्धेतुतया** तादृशशाब्दबोधहेतुतया **तं शब्दं** चैत्र पुत्रस्ते जात इत्यादि शब्दं **अवधारयति** निश्चिनोतीत्यर्थः । **व्यभिचारादिति** घटादिपदैः कार्यान्वितस्यैव बोधो जन्यत इति नियमे व्यभिचारादित्यर्थः । **अध्याहार्य्यमिति** तथाच तत्रापि लोडादिजन्यकार्यत्वोप-स्थितेः सत्वेन न तादृशनियमे व्यभिचार इति भावः । **तदभावाच्चेति** कार्य्यता-बोधकपदाध्याहाराभावाच्चेत्यर्थः।भट्टमतप्रक्षेपपूर्वकं स्वमतमुपसंहरति **इत्थंचेति** । **लाघवादिति** कार्यान्वितघटे शक्तिकल्पनापेक्षया घटमात्रे शक्तिकल्पने लाघवादित्यर्थः । **शक्तिर्निर्णीयते** यवपदस्येति शेषः । नन्वस्तूभयत्रापि यवपदस्य

कल्पने गौरवात् । हर्यादिपदे तु विनिगमकाभावान्नानाशक्तिकल्पनम् ॥ एवं विवरणादपि शक्तिग्रहः । विवरणं तु तत्समानार्थपदान्तरेण तदर्थकथनम् । यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद्घटपदस्य कलशे शक्तिग्रहः । एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते ॥ एवं प्रसिद्धपदसांनिध्यादपि शक्तिग्रहः । यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य कोकिले शक्तिग्रह इति । तत्र जातावेव शक्तिर्न तु व्यक्तौ, व्यभिचारादानन्त्याच्च । व्यक्तिं विना च जातिभानस्यासंभवाद्व्यक्तेरपि भानमिति केचित्, तन्न । शक्तिं विना व्यक्तिभानानु-

---

शक्तिः बाधकाभावादित्यत आह—**नानाशक्तिकल्पने इति**। नन्वेवं तर्हि हर्यादिपदेऽपि नानाशक्तिकल्पनं न स्यादत आह—**हर्यादिपदे त्विति। विनिगमकाभावादिति** अत्र तु वाक्यशेषस्यैव विनिगमकत्वादिति प्रसिद्धार्थकपदस्येत्यर्थः । अत्र विवरणस्य प्रसिद्धपदसमभिव्याहारस्य चानुमानविधया शक्तिग्राहकत्वमिति बोध्यम्. संप्रति प्रसङ्गात जात्यादिविशिष्टे शक्तिं व्यवस्थापयितुं जातावेव शक्तीत्यादिरूपं मीमांसकमतं निराकरणायोपपादयति **जातावेवेति** जातिविशिष्टे शक्तिस्वीकारे नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीतिन्यायाज्जातावपि शक्तिग्रहस्यावश्यकत्वाल्लाघवेन जातावेव शक्तिरितिभावः ॥ ननु यस्यां कस्यांचिद्व्यक्तौ शक्तिः सर्वासु वेति विकल्प्याद्ये दूषणमाह **व्यभिचारादिति** द्वितीयेऽप्याह—**आनन्त्याच्चेति । असंभवादिति** जातिभासकसामग्र्या एव व्यक्तिभासकत्वादिति भावः । **शक्तिं विनेति** शाब्दबोधं प्रति पदजन्यपदार्थोपस्थितेः कारणत्वेन शक्तिं विना व्यक्तिभानासम्भवादिति भावः । ननु घटपदात्समवायसम्बन्धेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्त्या पदजन्यपदार्थोपस्थितावपि वृत्तिरूपसम्बन्धेनैव पदजन्यत्वं विवक्षितं वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धरूपा तथाच व्यक्तौ शक्तिरूपसम्बन्धाभावेऽपि लक्षणारूपस्य तस्य सत्त्वान्न शक्तिं विना व्यक्तिभानस्यानुपपत्तिरित्यत आह—**न चेत्यादि**

पपत्तेः । न च व्यक्तौ लक्षणा, अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात् । न च व्यक्तिशक्तावानन्त्यं, सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात् । न चाननुगमः, गोत्वादेरेवानुगमकत्वात् । किंच गौः शक्तेति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः, यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात् । समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात् ॥ किं च गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम् ॥ गोत्वत्वं तु गवितरासमवेतत्वे सति सकलगोसमवेतत्वम् । तथा च गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्तवैव गौरवम् । तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति ॥ शक्तं पदं, तच्चतुर्विधम्, क्वचिद्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिकरूढम् । तथाहि । यत्रावयवार्थ एव बुध्यते तद्यौगिकं । यथा पाचकादिपदम् । यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम् , यथा गोमण्डलादिपदम् । यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् । यथा पङ्कजादिपदम् । तथाहि । पङ्कजपदमवयवशक्त्या

---

**अनुपपत्तिसंधानं विना** अन्वयाद्यनुपपत्तिप्रतिसंधानं विनेत्यर्थः स्वमतेऽपि पूर्वोक्तदूषणमाशङ्क्य निषेधति नचेत्यादिना ।**एकस्या एवेति** ईश्वरेच्छारूपायास्तस्या एकत्वादेवेत्यर्थः । **गोत्वादेरेवेति** तथा च गोशाब्दबोधे गोत्वविशिष्टविषयकशक्तिज्ञानत्वेन हेतुत्वान्नाननुगम इति भावः । ननु गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रति गोत्वशक्तिज्ञानत्वेनैव कारणत्वं वक्तव्यं नहि सर्वत्र पदजन्यपदार्थोपस्थितेरेव शाब्दबोधं प्रति कारणत्वमस्ति सम्बन्धस्यापि शाब्दबोधे भानादित्यत आह—**किञ्चेति** ॥ ननु जातिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वं न स्वीक्रियते इत्यत पुनराह—**किञ्चेति** । स्वमतमुपसंहरति—**तस्मादिति** । **शक्तं पदमिति** । **क्वचिदिति** किञ्चिदित्यर्थः प्रएवमेऽपि

पङ्कजनिकर्तृत्वरूपमर्थं बोधयति । समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति । नच केवलयाऽवयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यं, रूढिज्ञानस्य केवलयौगिकार्थज्ञाने प्रतिबन्धकत्वादिति प्राञ्चः । वस्तुतस्तु समुदायशक्त्युपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयो भवति सांनिध्यात् । यत्र तु रूढ्यर्थस्य बाधः प्रतिसंधीयते तत्र लक्षणया कुमुदादेर्बोधः । यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्वाह इत्याहुः । यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः । यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणयैवेति ॥ यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम् । यथोद्भिदादिपदम् । तत्र हि उद्भेदनकर्ता तरुगुल्मादिरपि बुध्यते यागविशेषोपीति ॥ ८१ ॥

## लक्षणा शक्यसंबन्धस्तात्पर्यानुपपत्तितः ।

गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसंधीयते तत्र लक्षणया तीरस्य बोध इति ॥ सा च शक्यसंबन्धरूपा । तथाहि । प्रवाहरूपशक्यार्थसंबन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणं, ततः शाब्दबोधः । परंतु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात्, यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात्, तत्र च यष्टिप्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा ॥ एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा सर्वतो दधि-

---

विरोधिविषयकज्ञानस्य प्रतिबन्धकत्वं जनकज्ञानविघटकत्वेनैवेतिनियमभङ्गरूपमास्वरसं प्राञ्च इत्यनेन सूचितं बोद्धव्यं मणिकृतां मतमाह—**वस्तुतस्त्विति** यौगिकरूढपदं दर्शयति—**यदि त्विति** ॥ ८१ ॥

लक्षणा जहत्स्वार्था अजहत्स्वार्था चेति द्विविधा तत्र जहत्स्वार्थां दर्शयति—**गङ्गायामिति** मूलस्य न्यूनतां परिहरति **तात्पर्यानुपपत्तिर्वेति**। **सा च** लक्षणा चेत्यर्थः तात्पर्यानुपपत्तेर्लक्षणाबीजत्वे बीजमाह—**परं**

रक्षायास्तात्पर्यविषयत्वात् । एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वे लक्षणा । इयमेवाजहत्स्वार्था लक्षणेत्युच्यते एकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात् ॥ यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद्घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात् । इदं तु बोध्यम् । शक्यार्थसंबन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः । यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् ॥ अत एव लक्ष्यतावच्छेदके न लक्षणा, तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः । परंतु, एवं क्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् ॥ यत्र तु शक्यार्थस्य परंपरासंबन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते । यथा द्विरेफादिपदे रेफद्वयसंबन्धो भ्रमरपदे ज्ञायते । भ्रमरपदस्य च संबन्धो भ्रमरे ज्ञायते । तत्र लक्षितलक्षणा ॥ किंतु लाक्षणिकं पदं नानुभावकं लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम् । शक्तिलक्षणान्यतरसंबन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात् । वाक्ये तु श-

---

त्विति, अजहत्स्वार्थां दर्शयति—एवमिति **एकसार्थवाहित्वे** एकसार्थवाहित्वविशिष्टे इत्यर्थः ॥ गङ्गायां घोषः इत्यत्र तीरत्वेन तीरबोधे जहत्स्वार्था गङ्गातीरत्वेन बोधे त्वजहत्स्वार्थैवेति दर्शयति—इदं तु बोध्यमित्यादिना । **परन्त्वेवं** लक्ष्यतावच्छेदकप्रकारकबोधस्य तत्र लक्षणां विनापि स्वीकारे इत्यर्थः **परम्परासम्बन्धरूपेति** द्विरेफ इत्यत्र स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपेत्यर्थः । ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वाल्लक्षणया शाब्दबोधो न स्यादत आह—**किन्त्विति** पदान्तरं सहोच्चरितं शक्तं पदमित्यर्थः पदानां सामर्थ्यावधारणादिति गङ्गायां घोष इत्यत्र तीरान्वितघोषपदार्थबोधं प्रति घोषपदमेव कारणमिति भावः । ननु तव मतेन वाक्ये शक्त्यभावाच्छक्यस-

क्तेरभावाच्छक्यसंबन्धरूपा लक्षणाऽपि नास्ति ॥ यत्र गम्भीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा। गम्भीरापदार्थस्य नद्या सहाभेदेनान्वयः क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात् ॥ यदि तत्रैकदेशान्वयोऽपि न स्वीक्रियते तदा नदीपदस्य गम्भीरनदीतीरे लक्षणा गम्भीरापदं तात्पर्यग्राहकम् ॥ बहुव्रीहावप्येवम् । तत्र हि चित्रगुपदादौ यद्येकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि लक्षणा गवि चित्राभेदान्वयः। यदित्वेकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रपदं तात्पर्यग्राहकम् ॥ एवमारूढवानरो वृक्ष इत्यत्र वानरपदस्य वानरारोहणकर्मणि लक्षणा, आरूढपदं तात्पर्यग्राहकम् । एवमन्यत्रापि बोध्यम् ॥ तत्पुरुषे तु पूर्वपदे लक्षणा। तथाहि। राजपुरुषादिपदे राजपदार्थेन पुरुषादिपदार्थस्य साक्षान्नान्वयो निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्। अन्यथा राजा पुरुष इत्यत्रापि तथान्वयबोधः स्यात् । घटो न पटः इत्यादौ घटपटाभ्यां नञः साक्षादेवान्वयान्निपातातिरिक्तेति। नीलो घट इत्यादौ नामार्थयोरभेदसंबन्धेनान्वयाद्भेदेनेति ॥ न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति

---

म्बन्धरूपा लक्षणापि न स्यादिति मीमांसकाक्षेपमिष्टापत्त्या वारयति—**वाक्ये ष्वित्यादिना** । ननु वाक्यलक्षणाया अस्वीकारे गभीरायां नद्यां घोष इत्यत्र का गतिरित्यत आह—**यत्र गभीरायामिति । क्वचिदिति** देवदत्तस्य गुरुकुलमित्यत्रेत्यर्थः, पदभेदेन व्युत्पत्तिभेदात्तादृशस्थले पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तेरकल्पनादिति भावः । पदार्थस्य पदार्थैकदेशे अभेदेनैवान्वयबोधस्याव्युत्पन्नत्वं न तु भेदेनापीति न देवदत्तस्य गुरुकुलमिति दृष्टान्तसाम्यमित्यत आह—**यदीति निपातातिरिक्तेति** निपातपदमव्ययस्याप्युपलक्षणं बोद्धव्यम् । **अन्यथा** निपातातिरिक्तनामार्थयोरपि भेदेनान्वयबोधस्य स्वीकारे, व्युत्पत्तिप्रविष्टस्य निपातातिरिक्तेत्यस्य **कृत्यमाह—**

वाच्यम्, अस्मृतविभक्तेरपि ततो बोधोदयात् । तस्माद्राजपदादौ राजसंबन्धिनि लक्षणा। तस्य च पुरुषेण सहाभेदान्वयः । द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते । तत्र न लक्षणा॥ न च साहित्ये लक्षणेति वाच्यं, साहित्यशून्ययोरपि द्वन्द्वदर्शनात्। न चैकक्रियान्वयित्वरूपं साहित्यमस्तीति वाच्यं, क्रियाभेदेऽपि धवखदिरौ पश्य छिन्धीत्यादौ तद्दर्शनात्साहित्यस्याननुभवाच्च । अत एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाभावाद्द्वन्द्व आश्रीयते तस्मात्साहित्यं नार्थः किंतु वास्तवभेदो यत्र तत्र द्वन्द्वः ॥ न च नीलघटयोरभेद इत्यादौ कथमिति वाच्यं, तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा, अभेद इत्यस्य चाश्रयाभेद इत्यर्थात् । समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते तदाऽहिनकुलमित्यादौ परपदेऽहिनकुलसमाहारे लक्षणा पूर्वपदं तु तात्पर्यग्राहकम् ॥ न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयः, अपेक्षाबुद्धिविशेषरूपस्य तस्य वादनासंभवादिति वाच्यं, परंपरासंबन्धेन तदन्वयात्। एवं पञ्चमूलीत्यादावपि । परे तु अहिनकुलमित्यादौ अहिर्नकुलश्च

---

पटो न घट इत्यादि । ततो बोधोदयादिति राजपुरुष इत्यतो बोधोदयादित्यर्थः, अभेदान्वय इति तथाच राजसम्बन्ध्यभिन्नः पुरुष इति राजपुरुष इत्येतस्य शाब्दबोधो भवतीत्यर्थः । द्वंद्वे तु इतरेतरद्वंद्वे त्वित्यर्थस्तेनाहिनकुलमित्यादिद्वन्द्वे उत्तरपदस्याहिनकुलसमुदायलक्षणायाः स्वीकारेऽपि न क्षतिः । विभक्त्यर्थद्वित्वप्रकारेणेति विभक्त्यर्थे कर्म्मत्वे प्रकारत्वेन भासत इत्यर्थः । मीमांसकः शङ्कते साहित्य लक्षणेति साहित्याश्रये लक्षणेत्यर्थः, साहित्यशून्ययोरपि सहवृत्तित्वरूपसाहित्यशून्ययोरपीत्यर्थः, कर्मधारयाद् द्वंद्वस्य भेदं दर्शयति किंत्विति, नवीनमतमाह-परेत्विति, ननु यदि समाहारो न बुध्यते तदेकवचनस्य कुत्रान्वय इत्यत आह—प्रत्येकमिति, पितरौ श्व-

बुध्यते प्रत्येकमेकत्वान्वयः, समाहारसंज्ञा च यत्रैकत्वं नपुंसकत्वं च द्वन्द्वश्च प्राणितूर्येत्यादिसूत्रेणोक्तं तत्रैव, अन्यत्रैकवचनमसाध्वित्याहुः। पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा, एवमन्यत्रापि। घटा इत्यादौ न लक्षणा घटत्वेन रूपेण नानाघटोपस्थितिसंभवात्। कर्मधारयस्थले तु, नीलोत्पलमित्यादावभेदसंबन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारः। तत्र च न लक्षणा, अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषो लक्षणापत्तेः, किंतु कर्मधारयो लक्षणाभावात्। न च निषादस्य संकरजातिविशेषस्य वेदानधिकाराद्याजनासंभव इति वाच्यं, निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात्। लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतयाऽदोषत्वादिति॥ उपकुम्भमर्धपिप्पलीत्यादौ परपदे तत्संबन्धिनि लक्षणा पूर्वपदार्थप्रधानतया चान्वयबोध इति। इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहादिति॥

**आसत्तिर्योग्यताकांक्षा तात्पर्यज्ञानमिष्यते॥ ८२॥**

**कारणं संनिधानं तु पदस्यासत्तिरुच्यते।**

आसत्तिरित्यादि। आसत्तिज्ञानं योग्यताज्ञानमाकाङ्क्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे कारणम्। तत्रासत्तिपदार्थमाह। संनिधानं त्विति। यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कारणम्। तेन 'गिरिर्भुक्तमग्निमान्देवदत्तेन' इत्यादौ न शाब्दबोधः। 'नीलो घटो द्रव्यं पटः' इत्यादावासत्तिभ्रमाच्छाब्दबोधः। आसत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः। ननु यत्र छत्री

---

मुरावित्यादाविति विरूपैकदेशस्थल इत्यर्थः। अत एव कर्म्मधारये लक्षणाभावादेवेत्यर्थः। पदशक्त्यैवेति समासघटकीभूतपदशक्तिलक्षणाभ्यामेव निर्वाहादित्यर्थः॥

शाब्दभ्रमाभावेऽपीति आसत्तिभ्रमस्य न शाब्दभ्रमप्रयोजकत्वं

कुण्डली वासस्वी देवदत्त इत्याद्युक्तं तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तदुत्तरपदस्मरणासंभव इति चेन्न, प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्य तावत्पदविषयकस्मरणस्याव्यवधानेनोत्पत्तेः। नानासंनिकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि संभवात्। तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात्। कथमन्यथा नानावर्णैरेकपदस्मरणम् ॥ परंतु तावत्पदार्थानां स्मरणादेकदैव खले कपोतन्यायेन तावत्पदार्थानां क्रियाकर्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित्।

वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥
अपरे तु। यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

तथा च खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्यार्थबोध इत्यप्याहुः। एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः। तत्तद्वर्णसंस्कारसहितचरमवर्णोपलंभेन तद्व्यञ्जकेनैवोपपत्तेरिति। इदं तु बोध्यम्। यत्र द्वारमित्युक्तं तत्र पिधेहीत्यादिपदस्य ज्ञानादेव बोधो न तु पिधानादिरूपार्थज्ञानात्। पदजन्यपदार्थोपस्थितेस्तच्छाब्दबोधे हेतुत्वात्। किंच क्रियाकर्मपदानां तेन तेनैव सह साकाङ्क्षत्वात्। तेन क्रियापदं विना कथं शाब्दबोधः स्यात्। तथा पुष्पेभ्य इत्यादौ

---

किन्तु योग्यताभ्रमस्यैवेत्यर्थः। प्राचीनमतं दर्शयति—**परन्त्वित्यादिना** केचिदित्यादिना सूचितामन्यथासिद्धिं प्रकटयति अपरे त्वित्यादिना ॥ मीमांसकमतं दूषयति **इदन्तु बोध्यमित्यादिना**। **पदजन्येति** पदार्थोपस्थितिमात्रस्य हेतुत्वे तु प्रत्यक्षादिनोपस्थितस्यापि शाब्दबोधापत्तेरिति भावः। ननु तात्पर्याभावादेव प्रत्यक्षादिनोपस्थितस्य पटादेः शाब्दबोधाभावस्तत्सत्त्वे तु शाब्दबोधो भवत्येवेत्यत आह **किंचेति**। पदार्थे तत्र तद्वत्तेत्यादिमूलेन तत्पदार्थे तत्त-

सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणम्, अस्तु वा तत्रापि भेदाग्रहः स एव कारणमिति, न चाऽन्यथाख्यातिः संभवति रजतप्रत्यक्षकारणस्य रजतसंनिकर्षस्याभावात् रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न, सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वादन्यत्रापि तत्कल्पनात्। न च संवादिप्रवृत्तौ तत्कारणं विसंवादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यं, लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। इत्थं च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणप्रत्यासत्तिकल्पनेऽपि न क्षतिः फलमुखगौरवस्यादोषत्वात् किंच यत्र रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं जातं तत्र न कारणबाधोऽपि।

---

हेतुत्वादितिभावः। कार्यकारणभावद्वयकल्पने गौरवादाह—**अस्तु वेति**। **तत्रापि** सत्यरजतस्थलेऽपीत्यर्थः। **रजतेन्द्रियसन्निकर्षस्याभावादिति** लौकिकसन्निकर्षस्य तत्र रजताभावेनासत्त्वाद् ज्ञानलक्षणायाश्च गौरवदोषदुष्टत्वेनाकल्पनादिति भावः। **हेतुतायाः क्लृप्तत्वादिति** अन्वयव्यतिरेकाभ्यामितिशेषः **अन्यत्रापि** रंगे रजतार्थिनः प्रवृत्तावपि। **तत्कल्पना**द्विशिष्टज्ञानहेतुत्वकल्पनादित्यर्थः तथाच रंगे रजतार्थिनः प्रवृत्तिः, विशिष्टज्ञानसाध्या, प्रवृत्तित्वाद्रजते रजतार्थिनःप्रवृत्तिवदित्यनुमानेनैव भ्रमकल्पनादिति भावः। अत्राप्रयोजकत्वमेवाशङ्कते **न चेति**। **तत्** विशिष्टज्ञानं, **लाघवेनेति** कार्यकारणभावद्वयकल्पनापेक्षया प्रवृत्तिमात्रे विशिष्टज्ञानस्य हेतुत्वकल्पनालाघवेनेत्यर्थः। पूर्वोक्तं प्रभाकरदूषणमुद्धरति **इत्थञ्चेति** प्रवृत्तिमात्रे विशिष्टबुद्धेर्हेतुत्वासिद्धौ चेत्यर्थः। **फलमुखगौरवस्येति** फलं कार्यकारणभावग्रहस्तन्मुखं तदधीनं यद्गौरवं तस्यादोषत्वादित्यर्थः। स्थलविशेषे कारणबाधाभावान्निवार्य्यमेव मिथ्याज्ञानमित्याह—**किञ्चेति**। **न कारणबाधोऽपीति** रजतत्वेन सह संयुक्तसमवायस्य सत्त्वात् नहि च तादृशं ज्ञानं रंगांशेऽपि प्रमा किंत्वन्यथाख्यातिरेवेतिभावः। नन्वतिप्रसङ्गभयेन तत्तद्विशेष्ये तत्तद्विशिष्टबुद्धिं प्रति तत्तद्विशेषणे तत्तद्विशेष्यघटितसन्निकर्षो हेतुरिति हि सिद्धान्तस्तथाच कथं रजत-

अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्यातां, रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात् त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात्। किंचानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा। यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम्। सेयमुभयतः पाशारज्जुः। इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं रङ्गं रजतत्तयावेदिषमित्यनुभवादिति संक्षेपः ॥ १३५ ॥ १३६ ॥

पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति—

**व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा।**
**हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥**

व्यभिचारस्येति। व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणम्। व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणमित्यर्थः। एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता। भूयोदर्शनं तु न कारणं व्यभिचारास्फूर्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते।

---

घटितसन्निकर्षेण रङ्गे रजतत्वग्रह इत्यत आह—**अपि चेति** प्रवृत्तिनिवृत्त्योः सामग्रीं दर्शयितुमाह—**रङ्ग** इति। ननु तत्तद्दोषाणां प्रवृत्त्यादिकं प्रति प्रतिबन्धकत्वस्वीकारे नैष दोष इत्यतआह—**किञ्चानुमानमिति**। **अनुमितिर्निराबाधा** बाधकाभावादन्यथाख्यातिरूपानुमितिः सिद्ध्यतीत्यर्थः **अनुमित्यनुरोधादिति** अयोगोलकं वह्निमदित्यनुरोधादित्यर्थः ॥ १३५ ॥ १३६ ॥

व्यभिचाराग्रहस्य व्याप्तिग्राहकतामुपपादयति **व्यभिचारग्रहस्येति**। सहचारग्रहस्यापि तामुपपादयति—**एवमिति**। केषांचिन्मते भूयोदर्शनस्य व्याप्तिग्रहे कारणत्वं तत्खण्डयति **भूयोदर्शनं** त्वित्यादिना भूयोदर्शनस्याहेतुत्वेऽपि क्वचिदुपयोगितामाह—**क्वचिदिति**। **तर्कोऽपेक्षित इति** शङ्कापन-

यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षबाधकतर्कोऽपेक्षितः। तथाहि। वह्निविरहिण्यपि धूमः स्यादिति यत्राशङ्का भवति तदा सा वह्निधूमयोः कार्यकारणभावस्य प्रतिसंधानान्निवर्तते। यद्ययं वह्निमान्न स्यात्तदा धूमवान्न स्यात्कारणं विना कार्यानुत्पत्तेः। यदि च क्वचित्कारणं विना कार्यं भविष्यति तदाऽहेतुक एव भविष्यतीति तत्राप्याशङ्का भवेत्तदा सा व्याघातादपसारणीया। यदि कारणं विना कार्यं स्यात्तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य वा नियमत उपादानं तवैव न स्यादिति। यत्र स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तं तर्कः क्वचिच्छङ्कानिवर्तक इति ॥ १३७ ॥

इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति—

**साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा।**
**स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥१३८॥**

साध्यस्येति। साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधिरित्यर्थः। ननु स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्तस्य साध्यव्यापकत्वाभावाच्छ्यामत्वस्य घटादावपि सत्त्वात्, एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्य-

---

यनार्थं तर्कोऽपेक्षितः इत्यर्थ। तदेव दर्शयति—**तथाहीत्यादिना**। **सा शङ्का**। **कारणं विनेति** तथाच यदि धूमो वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति तर्काकारो बोध्यः। **तत्रापि** तादृशतर्कप्रयोजकीभूतकार्यकारणभावग्रहेऽपीत्यर्थः **आशङ्का भवेदिति** प्रतिबन्धकीभूताशङ्का भवेदित्यर्थः व्याघातं दर्शयति **यदि हीत्यादिना** नन्वेवमनवस्थापात्तिरित्यत आह-**यत्रेति** ॥१३७॥

व्याप्तिग्रहोपायनिरूपणानन्तरमुपाधिनिरूपणे प्रसङ्गसङ्गतिं दर्शयितुमाह—**इदानीमिति**। **साध्यत्वाभिमतेति** यो यदवच्छिन्नव्यापकत्वे सति यदवच्छि-

त्रोद्भूतरूपवत्त्वं नोपाधिः स्यात्प्रत्यक्षत्वस्यात्मादिषु सत्त्वात्तत्र च रूपाभावात्, एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्याद्विनाशित्वस्य प्रागभावेऽपि सत्त्वात्तत्र च भावत्वाभावादिति चेन्न यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात्। मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं तदवच्छिन्नसाधनाव्यापकं च। एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वम्। बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं च। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वम्। सद्धेतौ तु एतादृशो धर्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किंचित्स्यात्। व्यभिचारिणि तूपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचाराधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरन्ततः संभवतीति ॥१३८॥

अत एव लक्ष्यमप्युपाधिस्वरूपमेतदनुसारेण दर्शयति—

**सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः।**
**हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥**

सर्वेति। स्वमुपाधिः स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः ॥ १३९ ॥

उपाधेर्दूषकताबीजमाह—

---

न्नाव्यापकः स तदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिरित्यर्थः। अन्तत इति तादृशधर्म्मान्तरस्य स्फूर्त्तावित्यर्थः ॥ १३८ ॥

**अत एवेति** यद्धर्मावच्छिन्नत्वघटितलक्षणस्य तात्पर्य्यविषयत्वादेव। **तदनुसारेण** पूर्वोक्तलक्षणानुसारेण ॥ १३९ ॥

**व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।**

व्यभिचारस्येति । उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः । तथाहि । यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैव उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी, तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति । व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् । यत्र तु किंचिद्धर्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति । बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाभावात्स्वव्याघातकत्वाच्च नोपाधिः। बाधोन्नीतस्तूपाधिर्भवत्येव । यथावह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नावुष्णत्वग्रहे वह्नीतरत्वमुपाधिः । यत्र तूपाधेः साध्यव्यापकता संदिह्यते स संदिग्धोपाधिः। पक्षेतरस्तु संदिग्धोपाधिरपि नोद्भावनीयः कथकसंप्रदायानुरोधात् । केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम् । तथाहि । अयो-

---

ननु पक्षेतरत्वे एकाश्रये येषां स्वसाध्यव्यभिचारितेति मूलेन प्रदर्शितस्योपाधिलक्ष्यत्वस्याभावादुपाधिलक्षणस्यातिव्याप्तिरित्यत आह—**बाधानुन्नीतस्त्विति** बाधेन पक्षे साध्यवत्त्वेन नोन्नीतः साध्यव्यापकत्वेनानिश्चित इत्यर्थः, **स्वव्याघातकत्वादु**पाधिमात्रस्य दूषकताव्याघातकत्वात् उपाधिव्यभिचारेण साध्यव्यभिचारानुमानेऽपि पक्षेतरत्वस्योपाधित्वसम्भवाद् व्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वस्यासम्भवादिति भावः । नन्वेवमपि यत्र साध्यव्यापकताग्राहकप्रमाणमस्ति तत्र पक्षेतरत्वे लक्षणातिव्याप्त्यापत्तिर्दुर्वारैवेत्यत: आह- **बाधोन्नीतस्त्विति** तथा च बाधोन्नीतपक्षेतरत्वस्य लक्ष्यत्वेन तत्र लक्षणसत्त्वस्येष्टापत्तिरेवेति भावः । **सन्दिग्धोपाधिरपीति** पक्षे साध्यसन्देहेन साध्यव्यापकतासन्देहस्य पक्षेतरत्वे सम्भवादितिभावः । केषांचिन्मतमाह—**केचित्त्विति** ।

गोलकं धूमवद्वह्नेरित्यादावयोगोलकं धूमाभाववदार्द्रेन्धनाभावादिति सत्प्रतिपक्षसंभवात्। इत्थं च साधनव्यापकोऽपि क्वचिदुपाधिः। यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यादावनुष्णाशीतस्पर्शवत्त्वम्। न चात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यं, सर्वत्रोपाधेर्दूषणान्तरसांकर्यात्। अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरित्याहुः॥

**शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥**
**अनुमानगतार्थत्वादिति वैशेषिकं मतम्।**
**तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः॥१४१॥**

शब्दोपमानयोरिति। वैशेषिकाणां मते प्रत्यक्षमनुमानं च प्रमाणम्। शब्दोपमानयोस्त्वनुमानविधयैव प्रामाण्यम्। तथा हि। दण्डेन गामानयेत्यादिलौकिकपदानि यजेतेत्यादिवैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वाद् घटमानयेति पदकदम्बवत्। यद्वा। एते पदार्था मिथःसंसर्गवन्तो योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत्। दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति। एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्तत्प्रवृत्तिनिमित्तकम्। यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्। यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्ध्यति। तन्मतं दूषयति। तन्न सम्यगिति व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात्। नहि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने

---

**इत्थञ्चेति** सत्प्रतिपक्षोत्थापकतया दूषकत्वे चेत्यर्थः। अत्र च सत्प्रतिपक्षोत्थापकत्वे च

ननु सर्वत्र शब्दश्रवणानन्तरमनुमितिरूपकार्य्यान्यथानुपपत्त्या व्याप्ति-

प्रमाणमस्तीति । किंच सर्वत्र शाब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियतामिति ध्येयम् ॥ १४० ॥ १४१ ॥

**त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।**
**द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥१४२॥**
**अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ।**

त्रैविध्यमिति । अनुमानं हि त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षः केवलान्वयी । यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ । तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् ॥ असत्सपक्षः केवलव्यतिरेकी । यथा पृथ्वी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ । तत्र हि जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभावात् । सत्सपक्षविपक्षोऽन्वयव्यतिरेकी । यथा वह्निमान्धूमादित्यादौ । तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति ॥

तत्र हि व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति—

**साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥१४३॥**

साध्याभावेति । साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । अत्रेदं बोध्यम् । यत्संबन्धेन यदवच्छिन्नं प्रति येन संबन्धेन येन रूपेण व्यापकता गृह्यते तत्संबन्धावच्छिन्नप्रतियोगिताकतद्धर्माव-

---

ज्ञानङ्कल्पनीयमत आह—किञ्चेति ॥ १४० ॥ १४१ ॥

तत्र तेषु मध्ये । असद्विपक्ष इति अत्यन्ताभावाप्रतियोगिसाध्यक इत्यर्थः । केवलव्यतिरेकिणं दर्शयति—असद्विपक्षक इति । अन्वयव्यतिरेकिणमाह—सत्सपक्षविपक्ष इति ।

च्छिन्नाभाववत्ताज्ञानात्तत्संबन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति । इत्थं च यत्र विशेषणतादिसंबन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिध्यति । यत्र तु तादात्म्यसंबन्धेनेतरव्यापकत्वं गन्धाभावस्य गृह्यते तत्र तादात्म्यसंबन्धेनेतरस्याभावः सिध्यति । स एवान्योन्याभावः । एवं यत्र संयोगसंबन्धेन धूमं प्रति संयोगसंबन्धेन वह्निव्यापकता गृह्यते तत्र संयोगसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसंबन्धावच्छिन्नप्रतियोगिताकधूमाभावः । अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम् । केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न तु व्यतिरेकव्याप्तिज्ञानं कारणम् । यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते । साध्यप्रसिद्धिस्तु घटादावेव ज्ञायतां पश्चात्पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति ॥ १४२ ॥ १४३ ॥

**अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।**
**व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥१४४॥**

अर्थापत्तिरिति । अर्थापत्तिः प्रमाणान्तरमिति केचन मन्यन्ते । तथाहि । यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो

---

ननु साध्यसाधनसहचारज्ञानाभावात्कथं व्यतिरेकव्याप्तिज्ञानमित्यत आह—**अत्र चेति** तथाच व्यतिरेकव्याप्तिज्ञाने नान्वयसहचारज्ञानस्यापेक्षेति भावः । आचार्य्यमतं दर्शयति—**केचित्त्विति** । ननु व्यतिरेकव्याप्तिज्ञानस्वरूपकारणाभावात्कथं व्यतिरेक्यनुमितिरित्यत आह—**न त्विति, व्यतिरेकीति** । व्यवहारप्रयोजकं धर्म्मं दर्शयति—यत्रेत्यादिना । ननु साध्यस्येतरभेदादेः पूर्वमप्रसिद्धत्वात्कथं व्यतिरेकसहचारग्रह इत्यत आह—**साध्यप्रसिद्धिस्त्विति** । ननु घटादौ साध्ये निर्णीते कथं तत्रेतरभेदानुमितिरित्यत आह—**पश्चादिति** ॥ १४२ ॥ १४३ ॥

**केचन** मीमांसकाः । **तदपि** मीमांसकमते प्रमाणत्वेनाभिमतार्थापत्तिरपि ।

गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यत इति। तदनुमानेन गतार्थत्वान्नेष्यते। तथाहि। यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते। एवं पीनो देवदत्तो दिवा न भुङ्क्त इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यतीति। अभावप्रत्यक्षस्यानुभाविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम्। किंचानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणकत्वात्प्रत्यक्षत्वम्। ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था। एवं चेष्टापि न प्रमाणान्तरं तस्याः संकेतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात्। यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४४ ॥

सुखं निरूपयति—

**सुखं तु जगतामेव काम्यं धर्मेण जायते।**

सुखं त्विति। काम्यमभिलाषविषयः। धर्मेणेति। धर्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः॥

दुःखं निरूपयति—

**अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम्॥ १४५॥**

अधर्मेति। अधर्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः। प्रतिकूलमिति। दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः॥१४५

इच्छां निरूपयति—

---

अनुमित्यन्तर्भावप्रकारं दर्शयति—तथाहीत्यादिना ॥ १४४ ॥

धर्मत्वेन सुखत्वेनेति इदन्तु प्राचां मतेन बोध्यं नवीनमते त्वीश्वरे नित्यसुखसत्त्वेन सुखत्वावान्तरजन्यसुखमात्रवृत्तिजातिविशेष एव धर्मत्वावच्छिन्नकार्यतावच्छेदको बोध्यः ॥ १४५ ॥

निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥

निर्दुःखत्वे इति । इच्छा द्विविधा फलविषयिणी उपायविषयिणी च । फलं तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अत एव पुरुषार्थः संभवति । यज्ज्ञातं सत्स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः। उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ॥ १४६ ॥

चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥

चिकीर्षेति । कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभवात् । चिकीर्षां प्रति कृतिसाध्यताज्ञानमीष्टसाधनताज्ञानं च कारणम् । तद्धेतुरिति । अत एव वृष्ट्यादौ कृतिसाध्यताज्ञानाभावान्न चिकीर्षा ॥ १४७ ॥

बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ।

बलवदिति । बलवद्द्विष्टसाधनताज्ञानं प्रतिबन्धकम् । अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा । बलवद्द्वेषः प्रतिबन्धक इत्यन्ये ।

तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥

तदहेतुत्वेति । बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः॥ १४८ ॥

---

तत्र तयोर्मध्ये । अत एव फलेच्छां प्रति फलज्ञानस्य हेतुत्वादेव । तल्लक्षणात्पुरुषार्थलक्षणात् । उपायेऽतिव्याप्तिवारणायाह—इतरेच्छेति ॥ १४६ ॥

अत एव कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति हेतुत्वादेव ॥ १४७ ॥

बलवद्द्विष्टसाधनताज्ञानमिति द्वेषे बलवत्त्वं जातिविशेषः । लाघवमभिप्रेत्य बलवद्द्वेषस्य प्रतिबन्धकत्ववादिमतमाह—बलवद्द्वेष इति ॥ १४८ ॥

द्वेषं निरूपयति—

**द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम् ।**

द्विष्टसाधनतेति । दुःखोपायविषयकं द्वेषं प्रति बलवद्द्विष्टसाधनताज्ञानं कारणमित्यर्थः । बलवदिष्टसाधनताज्ञानं प्रतिबन्धकम् । तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः ॥

प्रयत्नं निरूपयति—

**प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥**
**एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।**

प्रवृत्तिश्चेति । प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात्प्रयत्नस्त्रिविध इत्यर्थः ।

**चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥**
**उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।**

चिकीर्षेत्यादि । मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः । कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति । कार्यताज्ञानं प्रवर्तकमिति गुरवः । तथाहि । ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति । सा च कृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात्

---

तेन द्वेषे बलवत्त्वविशेषणेन प्रवृत्तिरिति प्रवृत्तित्वञ्च रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः, निवृत्तित्वमपि द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेष एव, जीवनयोनियत्नत्वञ्च प्राणसंचारविषयकयत्नत्वं ।

नन्वेवं मधुविषसंपृक्तान्नभोजने प्रवृत्त्यापातिरित्यत आह—**मधुविषसम्पृक्तान्नभोजनादाविति** । **चिकीर्षाभावादिति** चिकीर्षां प्रति बलवदनिष्टानुबन्धित्वज्ञानाभावस्य हेतुत्वादितिभावः । प्रभाकरमतमाह—**कार्यताज्ञानमिति** ।

। चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा । तत्र कृतिसाध्यत्वप्रकारस्तत्प्रकारकज्ञानं चिकीर्षायां तद्द्वारा च प्रवृत्तौ हेतुर्न त्विष्टसाधनताज्ञानं तत्र हेतुः । कृत्यसाध्येऽपि चन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः। ननु कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न, तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात् । न च द्वयोरपि हेतुत्वं, गौरवात् । ननु त्वन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः कार्यताज्ञानस्य सत्त्वादिति चेन्न, स्वविशेषणवत्ताप्रतिसंधानजन्यकार्यताज्ञानस्य प्रवर्तकत्वात् । काम्ये हि यागपाकादौ कामना स्वविशेषणम् । ततश्च बलवदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्यताज्ञानम् । ततश्च प्रवृत्तिः । तृप्तश्च भोजने न प्रवर्तते तदानीं कामनायाः पुरुषविशेषणत्वाभावात् । नित्ये च शौचादिकं पुरुषविशेषणम् । तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः । ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानत्वेनैव हेतुत्वमस्तु बलवदनिष्टाननुबन्धित्वं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न, इष्टसाधनत्व

---

सा च चिकीर्षा च । तत्र चिकीर्षायां । तद्द्वारा चिकीर्षाद्वारेत्यर्थः । द्वयोरेव द्वयोरपीत्यर्थः । स्वविशेषणेति स्वं प्रवर्तमानः पुरुषस्तद्विशेषणं काम्ये कामना नित्ये कालशौचादि तद्वत्ता, पक्षे तत्सम्बन्धस्तस्य प्रतिसन्धानं ज्ञानमित्यर्थः । कामना यागपाकादिगोचरकामनेत्यर्थः । नन्वेवं मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिः प्रवर्तकस्य काम्यसाधनताज्ञानजन्यकार्य्यताज्ञानस्य तत्रापि सत्त्वादित्यत आह—ततश्चेति, बलवदनिष्टेति तथाच स्वविशेषणवत्ताप्रतिसन्धाने बलवदनिष्टाननुबन्धित्वविषयकत्वं विशेषणं देयमितिभावः । अतीतभोजनकामनाघटितलिंगजन्यकार्य्यताज्ञानस्य सत्त्वात्तृप्तोऽपि भोजने प्रवर्तेत इत्यत आह—तृप्तश्चेति । तदानीमिति तथाच स्वविशेषणेत्यत्र तदानींतनत्वं विशेषणं देयमिति भावः । नैयायिकः शङ्कते नन्विति । मीमांसक उत्तरयति—

कृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्साध्यत्वसाधनत्वयोर्विरोधात् । असिद्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वम् । न चैकमेकेनैकदा सिद्धमसिद्धं चेति ज्ञायते, तस्मात्कालभेदादुभयं ज्ञायत इति मैवं, लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात् । न च साध्यत्वसाधनत्वयोर्विरोधो यदा कदाचित्साध्यत्वसाधनत्वयोरविरोधादेकदा साध्यत्वसाधनत्वयोश्च ज्ञानात् ॥ नव्यास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्तकमनागते तस्य ज्ञातुमशक्यत्वात् । किंतु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य प्रतिसंधाय तत्र प्रवर्तते । तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसंधाय पाके प्रवर्तत इत्याहुस्तन्न, स्वकल्पितालिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना संभोगादौ च तदभावात् । इदं तु बोध्यम् । इदानींतनेष्टसाधनत्वादिज्ञानं प्रवर्तकं तेन भावियौवराज्ये बालस्य न प्रवृत्तिस्तदानीं कृतिसाध्यत्वाज्ञानात् । एवं तृप्तश्च भोजने न प्रवर्तते तदानीमिष्टसाधनत्वाज्ञानात् । प्रवर्तते च रोगदूषितचित्तो विषादिभक्षणे तदानीं बलवदनिष्टानुबन्धित्वाज्ञानात् । न चास्तिकस्यागम्यागमनशत्रुवधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम्, उत्कटरागादिना नरकसाधनताधीतिरोधानात् वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती, किंत्विष्टसाधनताज्ञानादिच्छामात्रम् ।

---

नेत्यादिना । तदेतत्सर्वं न युक्तियुक्तमित्याह नैयायिकः मैवमित्यादिना । यदाकदाचिदिति यत्किञ्चित्कालीनस्य साध्यत्वस्य यत्किञ्चित्कालीनेन साधनत्वेन विरोधाभावादित्यर्थः । प्राभाकरानुयायिनवीनमतमाह—नव्यास्त्विति । नन्विष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वे भावियौवराज्ये प्रवृत्त्यापत्तिरित्यत आह—इदं तु बोध्यमिति । उत्कटरागादिनेति अगम्यागमनजन्यसुखे उत्कटरागादिनेत्यर्थः । तिरोधानादनुत्पादनात् । प्रवृत्तिरूपेति कृतिसाध्यताज्ञान-

कृतिश्च प्रवृत्तिरूपा बोध्या। तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः। इत्थं च प्रवर्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थः। इत्थं च विश्वजिता यजेतेत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते। नन्वहरहः संध्यामुपासीतेत्यादाविष्टानुत्पत्तेः प्रवृत्तिः कथम्, न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यं तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः। कामनाभावे चाकरणापत्तेः इत्थं च यत्र फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न, ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात्। नच कामनाभावेऽकरणतापत्तिः, त्रिकालसन्ध्यापाठादाविव कामनासद्भावस्यैव कल्पनात्, न तु वेदबोधितकार्यताज्ञानात्प्रवृत्तिरिति संभवति स्वेष्टसा-

---

मित्यत्र प्रवृत्तिरित्यनेन कृतेः प्रवेश इत्यर्थः। इत्थञ्चेति प्रवृत्तिं प्रति बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वबुद्धेर्हेतुत्वे चेत्यर्थः। ननु विश्वजिता यजेतेत्यादौ फलाश्रवणेनेष्टसाधनताज्ञानाभावात्प्रवृत्तिर्न स्यादित्यत आह— इत्थञ्चेति विधेरपीष्टसाधनत्वाद्यर्थकत्वे चेत्यर्थः। नन्वेवं संध्यावन्दनादिरूपे कर्मणि फलाभावान्नेष्टसाधनत्वज्ञानं प्रवर्तकं न वा विधेरपीष्टसाधनत्वादिकमर्थः कल्पयितुं शक्यः इत्यभिप्रायात् शङ्कते नन्विति, न चार्थवादिकमिति "सन्ध्यामुपासते ये तु, सततं शंसितव्रताः। विधूतपापास्ते यान्ति, ब्रह्मलोकं सनातनं॥ १॥ इत्यर्थवादबोधितमित्यर्थ। तथा सति सन्ध्यावन्दनादीनामर्थवादबोधितफलकल्पने सति। नित्यत्वहान्यापत्तेरिति नित्यत्वकाम्यत्वयोर्विरोधादित्यभिमानादितिभावः। ननु तद्विरोधित्वे मानाभाव इत्यत आह—कामनाभाव इति अकरणापत्तेरिति अकरणे प्रत्यवायानुत्पत्तेरित्यर्थः, कामनारहितस्य सन्ध्यावन्दनादावधिकाराभावादनधिकारिणाऽकृतस्य प्रत्यवायाजनकत्वादितिभावः। नन्वेवं सन्ध्यावन्दनादिफलश्रुतेर्वैयर्थ्यमित्यत आह—इत्थञ्चेति निष्कामानामपि सन्ध्याद्यकरणे प्रत्यवायजनकत्वे चेत्यर्थः अर्थवादमात्रमिति अर्थवादतया तस्य स्तुतिमात्रे तात्पर्यमितिभावः। ननु नित्यविषयकप्रवृत्तौ प्रतीष्टसाधनताज्ञानं

धनत्वमविज्ञाय तद्देशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसंभवात् । यदपि पण्डापूर्वं फलमिति तदपि न कामनाभावेऽकरणापत्तेस्तौल्यात् । कामनाकल्पने स्वार्थवादिकफलमेव रात्रिसत्रन्यायात्कल्प्यताम्, अन्यथा प्रवृत्त्यनुपपत्तेः । तेनानुत्पत्तिं प्रत्यवायस्यान्ये मन्यन्ते । एवम् ।

सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।

विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥

एवम् । दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् ।

इति प्रीत्यात्मकमेव फलमस्तु । न च पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यं, गयाश्राद्धादावुद्देश्यत्वसंबन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात् । अत एवोक्तं शास्त्रदर्शितफलमनुष्ठानकर्तरीत्युत्सर्ग इति । पितॄणां मुक्तत्वे तु स्वस्य स्वर्गादिफलं यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गजनकत्वात् । पण्डापूर्वार्थं प्रवृत्तिश्च न संभवति नहि तत्सुखदुःखाभावत्वतः पुरुषार्थो न वा तत्साधनम्, प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेदित्थम्, यथा

---

न कारणं किन्तु वेदबोधितकार्यताज्ञानमेवेत्यत आह—**न त्विति** । **स्वेष्टसाधनत्वमिति** अन्वयव्यतिरेकाभ्यामिष्टसाधनताज्ञानस्य प्रवृत्तिं प्रति हेतुत्वादितिभावः । प्रभाकरमतं दूषयति—**यदपीत्यादिना** । **कामनाभावे** पण्डात्मकफलकामनाभावे । **रात्रिसत्रन्यायादिति** तथाच ज्योतिर्गौरित्यादिवाक्यो पन्नकर्म्मणां यथा लाघवेनार्थवादिकमेव प्रतिष्ठारूपं फलं सिद्धान्तितं तथेहापि सन्ध्यावन्दनादिनित्यकर्म्मणामप्यार्थवादिकमेव फलङ्कल्प्यंत इतिभावः । **अन्यथा** फलाभावे, **तेन** आर्थवादिकफलकल्पने लाघवेन । **उत्सर्ग** इति कर्तृमात्रगतत्वे तु व्यभिचाराभावान्नियम एव स्यादिति भावः । **पण्डापूर्वार्थमिति, न वा तत्साधनमिति,** तथा चेच्छाविषयत्वाभावेन फलत्वाभावान्न तत्साधनताज्ञानं प्रवर्तकमितिभावः । ननु त्वन्मतेऽपि प्रत्यवायानुत्पत्तेः कथं फलत्वं स्वत. पुरुषार्थत्वाभावात दुःखानुत्पत्तिरूपपुरुषार्थसाधनत्वेनापि न. तत्रेच्छाविष-

हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः । एवं प्रत्यवायाभावसत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणताया दुःखप्रागभावं प्रत्यपि सुवचत्वात् । एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति । ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः, इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न, तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः, किंतु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते । अथवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः । तदभावश्च नञा बोधमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति । ननु श्येनेनाभि-

---

यत्वं सम्भवति दुःखानुत्पत्तेः प्रागभावरूपत्वेन प्रत्यवायानुत्पत्तिजन्यत्वाभावादित्याशङ्कते—**प्रत्यवायानुत्पत्ताविति** । परिहरति इत्थमित्यादिना प्रत्यवायाभावः प्रत्यवायप्रागभावः **तदभावे** सन्ध्यावन्दनादिनित्यकर्माभावे, **तदभावः** प्रत्यवायाभावस्याभावः । **एवमिति, तदभावे** प्रत्यवायाभावस्याभावे, **तदभावः** दुःखप्रागभावस्याभावः दुःखस्वरूप इत्यर्थः । **योगक्षेमसाधारणेति** योगो अप्राप्तस्य प्राप्तिः क्षेमः (प्राप्तस्य) सिद्धस्य संरक्षणं तथाच योगक्षेमसाधारणाया एव कारणतायास्तत्र प्रविष्टत्वान्न प्रवृत्तिविरोध इति भावः । **एवमेवेति** योगक्षेमसाधारणमेव न कलञ्जमित्यत्र कलञ्जभक्षणाभावः इष्टसाधनमितिशाब्दबोधो भवति बाधकाभावात्तत्राशङ्कते—**नन्विति, कथं नञर्थान्वय इति** विध्यर्थान्वितस्य नञर्थाभावस्य कलञ्जभक्षणेऽन्वयो न सम्भवति इष्टसाधनत्वाभावस्य कलञ्जभक्षणे बाधितत्वादित्यर्थः । **बलवदनिष्टाननुबन्धित्वमात्रमिति** विधेः कृतिसाध्यत्वादिषु त्रिषु शक्तिस्वीकारेण कचित्कस्यचित्कचिच्च कस्यचिद्विध्यर्थस्य बोधादितिभावः । प्रवृत्तिं प्रति कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानमेकमेव कारणं लाघवादतो विधेरपि विशिष्टमेव कारणमित्यभिप्रायवानाह—**अथवेति, विश्राम्यतीति** बलवदनिष्टा-

चरन् यजेतेत्यादौ कथं बलवदनिष्टाननुबन्धित्वमर्थः श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्, न च वैधव्यान्य निषेध इति वाच्यम्, अभिचारे प्रायश्चित्तोपदेशात्, न च मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्तुश्च हिंसकत्वापत्तिर्गललग्नान्नभक्षणजन्यमरणे स्यान्नरस्य पापापत्तिश्चेति वाच्यं, मरणोद्देश्यकत्वस्यापि विशेषणत्वात्, अन्योद्देश्यकक्षिप्तनाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न, श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात्। अत एव काशीमरणार्थं कृतशिवपूजादेरपि न हिंसात्वं। न च साक्षान्मरणजनकस्यैव हि हिंसात्वं श्येनस्तु न तथा किंतु तज्जन्यापूर्वमिति वाच्यं, खड्गाघातेन ब्राह्मणे व्रणपाकपरंपरया मृते हिंसा-

---

ननुबन्धित्वाभावे पर्यवस्यतीतिभावः। विशिष्टस्य न विध्यर्थत्वं सम्भवतीत्याशङ्कते—नन्विति। **कथमिति** श्येने बलवदनिष्टाननुबन्धित्वस्य बाधितत्वादितिभावः। **न निषेध इति** मा हिंस्यात् सर्वाभूतानीति निषेधस्य वैधहिंसेतरहिंसापरत्वादितिभावः। **प्रायश्चित्तोपदेशादिति** अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहतीति प्रायश्चित्तोपदेशादित्यर्थस्तथाच प्रायश्चित्तोपदेशवैयर्थ्यापत्त्या मा हिंस्यादिति निषेधस्य न वैधहिंसेतरहिंसापरत्वमिति भावः। ननु यदि साक्षान्मरणानुकूलव्यापारो हिंसा तदा श्येने साक्षान्मरणानुकूलव्यापारत्वस्यासत्वान्न बलवदनिष्टाननुबन्धित्वविरोधो यदि च साक्षात्परम्परासाधारणं मरणानुकूलव्यापारमात्रं हिंसा, तदा तु खड्गकारादेरपि हिंसकत्वापत्तिरित्याशङ्कते—**न चेत्यादिना**। **विशेषणत्वादिति** तथाच साक्षात्परम्परासाधारण एव मरणानुकूलव्यापारो हिंसा। ननु मरणोद्देश्यकत्वनिवेशे अन्योद्देशेन प्रक्षिप्तबाणेन यत्र ब्राह्मणमृतिस्तत्र बाणप्रक्षेप्तुर्हिंसा न स्यादित्यत आह—**अन्योद्देश्यकेति, वाचनिकमिति** न तु मा हिंस्यादिति निषेधविषयतयेतिभावः। **अदृष्टाद्वारकेति** तथाच श्येनस्यादृष्टद्वारैव वैरिमरणसाधनत्वान्न पूर्वोक्तो दोष इतिभावः। **अत एवेति** अदृष्टाद्वारकत्वविशेषणादेवेत्यर्थः। केचित्तुमतमाह—

त्वानापत्तेः। केचित्तु श्येनस्य हिंसा फलं न तु मरणम्। तेन श्येनजन्यखड्गघातादिरूपा हिंसाऽभिचारपदार्थः। तस्य च पापजनकत्वम्। अतः श्येनस्य वैधत्वात्पापाजनकत्वेऽपि अग्रिमपापं प्रतिसंधाय सन्तो न प्रवर्तन्त इत्याहुः। आचार्यास्तु आप्ताभिप्रायो विध्यर्थः। पाकं कुर्या इत्यादावाज्ञादिरूपेच्छावाचित्वाल्लिङ्मात्रस्येच्छावाचित्वं लाघवात्। एवं च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः। ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्तते। कलञ्जभक्षणे तदभावान्न प्रवर्तते। यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधेरेव तद्बुद्धेः इव श्रुतकुमार्याः पुंयोगे मानम्। न च कर्त्रस्मरणं बाधकं, कपिलकणादादिभिरद्यपर्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वात्। अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः।

---

**केचित्त्विति** हिंसाफलं साक्षान्मरणफलको व्यापारः फलमित्यर्थः। **तस्य** खड्गघातादेरित्यर्थः। आस्तिकानां श्येने कथं न प्रवृत्तिरित्यत आह—**अग्रिमेति** तथा च साक्षात्पापजनकत्वाभावेऽपि श्येनस्य परम्परया पापप्रयोजकत्वान्न तत्र शिष्टाः प्रवर्तन्त इति भावः। उदयनाचार्यमतमाह—**आचार्यास्त्विति। लिङ्मात्रस्येच्छावाचित्वमिति** पाकं कुर्याः पाकं कुर्यामिति मध्यमोत्तमपुरुषयोराज्ञाध्येषणारूपेच्छावाचित्वं क्लृप्तं तद्दृष्टान्तद्वारा प्रथमपुरुषेऽपीच्छावाचित्वमनुमेयमितिभावः। **लाघवादिति** इच्छात्वेन विधिशक्तौ लाघवादित्यर्थः। **अनुमाय प्रवर्तत इति** तथाच विध्यर्थ आप्ताभिप्रायः स चेष्टसाधनतानुमापक इष्टसाधनताज्ञानं च प्रवर्तकमित्युदयनाचार्यमतं तथाचोक्तं—"विधिर्वक्तुरभिप्रायः, प्रवृत्त्यादौ लिङादिभिः। अभिधेयोऽनुमेया तु, कर्तुरिष्टाभ्युपायता ॥ १ ॥" इति अनुमानप्रकारश्चेत्थं यागो मम बलवदनिष्टाननुबन्धीष्टसाधनं मत्कृतिसाध्यतयाप्तेष्यमाणत्वात् मद्भोजनवदिति। **तदभावादिति** तेष्यमाणत्वाभावादित्यर्थः। ननु वेदे वक्तुरभावात्कस्येच्छा लिङा बोधनीयेत्यत **आह—परित्विति** विधेः कर्तृभिन्नेच्छाबोधने सामर्थ्याभावाद्विधिरेव वेदकर्तरीश्वरं

तत्रैव कर्तृस्मरणमस्तीति चेद्वेदेऽपि 'छन्दांसि जज्ञिरे तस्मात्' इत्यादिकर्तृस्मरणमस्त्येव। एवं "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इत्यपि द्रष्टव्यम्।

स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा।
शिवादिऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः॥

इति तु वेदस्य स्तुतिमात्रम्। न च पौरुषेयत्वे भ्रमादिसंभवादप्रामाण्यं स्यादिति वाच्यं,नित्यसर्वज्ञत्वेन निर्दोषत्वात्। अत एव पुरुषान्तरस्य भ्रमादिसंभवान्न कपिलादेरपि कर्तृत्वं वेदस्य। किंच वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात्सुतरां तत्संदर्भस्य वेदस्यानित्यत्वमिति संक्षेपः॥ उपादानस्येति। उपादानस्य समवायिकारणस्याध्यक्षं प्रत्यक्षं प्रवृत्तौ कारणमिति॥

**निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनता धियः॥१५१॥**

निवृत्तिरिति। द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः॥ १४९-१५१॥

**यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्।**

यत्न इति। जीवनयोनियत्नो यावज्जीवनमनुवर्तते। स चातीन्द्रियः॥

तत्र प्रमाणमाह—

**शरीरे प्राणसंचारे कारणं परिकीर्तितम्॥१५२॥**

---

मानमितिभावः। **अन्यथा** वेदे सकर्तृकत्वानभ्युपगम इत्यर्थः **तत्रैव** स्मृतिष्वेव। **स्तुतिमात्रमिति** तथाच पूर्वोक्तश्रुतिस्मृत्योर्विरोधात् स्वयम्भूरित्यादिभारतस्य स्तुतिमात्रपरत्वमेवेतिभावः। **अत एव** नित्यसर्वज्ञत्वाभावादेव। ननु नित्यसर्वज्ञपुरुषप्रणीतत्वापेक्षया वेदस्यैव नित्यनिर्दोषत्वं स्वीकर्तव्यमिति सकर्तृकत्वानुमाने बाध इत्यत आह—**किञ्चेति**॥१४९॥१५०॥१५१॥

**तत्र** जीवनयोनिप्रयत्ने॥ १५२॥

शरीर इति प्राणसंचारो हि आधिक्यवत्सादिः । इत्थं च प्राणसंचारस्य सर्वस्य यत्नसाध्यत्वानुमानात्प्रत्यक्षयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः । स एव जीवनयोनिर्यत्नः ॥१५२॥

गुरुत्वं निरूपयति—

**अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् ।**
**अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥१५३॥**
**तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि ।**

अतीन्द्रियमिति । अनित्य इति । अनित्ये द्व्यणुकादौ तद्गुरुत्वमसमवायि, असमवायिकारणम् । पतनाख्य इति । आद्यपतन इत्यर्थः ॥

द्रवत्वं निरूपयति—

**सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥१५४॥**
**सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।**

सांसिद्धिकमिति । द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकं चेति । द्वितीयं नैमित्तिकम् ॥

**परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥१५५॥**

परमाणावति । जलपरमाणौ द्रवत्वं नित्यमित्यर्थः । अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम् । कुत्रचित्तेजसि कुत्रचित्पृथिव्यां च नैमित्तिकं द्रवत्वम् ॥ १५३—१५५ ॥

**नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।**

नैमित्तिकमिति । वह्नीति । अग्निसंयोगजन्यं नैमित्तिकं द्रवत्वम् ।

---

गुरुत्वं निरूपयतीति द्वितीयादिपतने वेगस्यासमवायिकारणत्वादाह—आद्यपतन इति ॥ १५३ ॥ १५४ ॥ १५५ ॥

तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां च वर्तत इत्यर्थः ॥

**द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥ १५६ ॥**

द्रवत्वमिति । हेतुरिति । असमवायिकारणमित्यर्थः । संग्रहे सक्तुकादिसंयोगविशेषे तद्द्रवत्वं स्नेहसहितमिति बोद्धव्यम् । तेन द्रुतसुवर्णादीनां न संग्रहः ॥ १५६ ॥

स्नेहं निरूपयति—

**स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।**
**तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥**

स्नेह इति । जले इति । जल एवेत्यर्थः । असौ स्नेहः । ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चासौ जलीयः, तथा सति दहनप्रातिकूल्यं स्यादत आह । तैलान्तर इति । तत्प्रकर्षात्स्नेहप्रकर्षात् । तैले उपलभ्यमानस्नेहोऽपि जलीय एव । तस्य प्रकृष्टत्वादग्नेरानुकूल्यम् । अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ॥ १५७ ॥

संस्कारं निरूपयति—

**संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।**

संस्कारेति । वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः ।

**मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥**

मूर्तमात्र इति । कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः । शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते । तेन च पूर्वकर्मनाशस्तत

---

**अग्निसंयोगजन्यमिति** अग्निसंयोगासमवायिकारणमित्यर्थः । **तच्च** नैमित्तिकं द्रवत्वमित्यर्थः ॥ १५६

**असौ** तैले प्रतीयमानः स्नेहः ॥ १५७ ॥

**वेगो जन्यत** इति वेगत्वं जातिविशेषः प्रत्यक्षसिद्धः ॥ १५८ ॥ १६० ॥

उत्तरं कर्म । एवमग्रेऽपि । विना च वेगं कर्मणः कर्मप्रतिबन्धकत्वादपूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात् । यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥ १५८ ॥

**स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि**

**अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् १५९**

स्थितिस्थापकेति । अतीन्द्रिय इति ॥ आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात् । केचिदिति । चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः । असौ स्थितिस्थापकः । क्वचिदाकृष्टशाखादौ ॥ १५९ ॥

**भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।**

**उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥१६०॥**

भावनाख्य इति । तस्य संस्कारस्य । उपेक्षात्मकज्ञानात्संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तम् । तत्संशयात्तस्यानुत्पत्तेर्निश्चय इत्युक्तम् । तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः । ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वम्, तेनोपेक्षादिस्थले न स्मरणम्, इत्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न, विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् । किंचोपेक्षास्थले संस्कारकल्पनाया गुरुत्वात्संस्कारं प्रति चोपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् ॥ १६० ॥

**स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।**

असौ संस्कारः । तत्र प्रमाणं दर्शयति—स्मरण इति । यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः संस्कारः कल्प्यते । विना व्यापारं

---

तत्र संस्कारे प्रमाणमनुमानं । मणिकृन्मतमाह—परे त्विति । तत्र धर्म्मे ।

पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्स्वस्वव्यापारान्यतराभावे कारणत्वासंभवात्। न च प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्, अप्रयोजकत्वात्। परे त्वनुद्बुद्धसंस्कारात्प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्स्मरणस्यैव प्रत्यभिज्ञानं प्रति हेतुत्वं कल्प्यत इत्याहुः॥

अदृष्टं निरूपयति—

**धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥१६१॥**
**गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः।**

धर्माधर्माविति। स्वर्गादीति। स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः। तत्र प्रमाणं दर्शयितुमाह। यागादीति। यागादिव्यापारतया धर्मः कल्प्यते। अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात्। तदुक्तमाचार्यैः।

चिरध्वस्तं फलायालं न कर्मातिशयं विना। इति।

ननु यागध्वंस एव व्यापारः स्यात्, न च प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वं, सर्वत्र तथात्वे मानाभावात्, न च त्वन्मते फलानन्त्यं, मन्मते चरमफलस्यापूर्वनाशकत्वान्न तथात्वमिति वाच्यं, कालविशेषस्य सहकारित्वादित्यत आह—गङ्गास्नानेति। गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः॥

ननु ध्वंसोऽपि न व्यापारोऽस्तु, न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्, अनन्यथासिद्धनियतपूर्ववर्तित्वस्य तत्रापि सत्त्वात्, अव्यवहितपूर्ववर्तित्वं हि चक्षुःसंयोगादेः कारणत्वे

यागादीति आदिना दानादिपरिग्रहः। अन्यथा धर्माभावे। आचार्यैरुदय-

न तु सर्वत्र कार्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वे इत्यत आह—

**कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥१६२॥**

कर्मनाशेति । यदि ह्यपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात्, नहि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति । एतेन देवताप्रीतिरेव फलमित्यपास्तम् । गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसंभवाच्च । देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात् । प्रीतिः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसंभवात् । जन्यसुखादेस्तत्राभावात् । तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते ॥१६१॥१६२॥

**अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ।**

अधर्म इति । नरकादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्म इत्यर्थः

तत्र प्रमाणमाह—

**प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ॥१६३॥**

प्रायश्चित्तेति । यदि ह्यधर्मो न स्यात्तदा प्रायश्चित्तादिनाश्यत्वं न स्यात् । नहि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते तस्य पूर्वमेव विनष्टत्वादिति भावः ॥ जीवेति । ईश्वरस्य धर्माधर्माभावादिति भावः ॥ १६३ ॥

---

नाचार्यैरित्यर्थः । कार्य्यकालवृत्तित्वमिवेति यथा समवायिकारणस्य कार्य्यकालवृत्तित्वेन कारणत्वं न त्वसमवायिकारणे तथेत्यर्थः । तेन कर्मनाशाजलस्पर्शादिना, तस्य यागादेः, पूर्वमेव कर्मनाशाजलस्पर्शादितः पूर्वं, वृत्तत्वादिति उत्पन्नत्वाद्विनष्टत्वाच्चेत्यर्थः १६१ ॥ १६२ ॥

तत्राधर्म्मे, तेन प्रायश्चित्तादिना ॥ १६३ ॥

**इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।**

इमौ धर्माधर्मौ । वासनेति । अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्मणी न फलायालमिति भावः । ज्ञानादपीति । अपिना भोगपरिग्रहः । ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वं 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति वचनविरोधात् । इत्थं तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेन्न, तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात्, कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः । तदुक्तम् ।

ज्ञानाग्निः सर्वकर्माणीत्यादिना ।

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । इति ।

ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्याज्ज्ञानेन च सर्वेषां कर्मणां नाशादिति चेन्न, प्रारब्धेतरकर्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति ॥

शब्दं निरूपयति—

**शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः॥ १६४॥**
**कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।**
**सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥१६५॥**
**वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।**

शब्द इति । नभोवृत्तिराकाशसमवेतः । दूरस्थशब्दस्याग्रहणादाह । श्रोत्रेति । ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह ।

---

इत्थं चेति कर्मणां भोगकर्मनाश्यत्वे चेत्यर्थः । अन्यथा उपलक्षकत्वाभावे । तदभिप्रायमेवेति - प्रारब्धकर्माभिप्रायमेवेत्यर्थः । गौरवादिति

बीचीति । आद्यशब्देन बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते । तेन चापरस्तद्व्यापकः । एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति।

**कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६॥**

कदम्बेति । आद्यशब्दाद्दशदिक्षु दश शब्दा उत्पद्यन्ते । ततश्चान्ये दश शब्दा उत्पद्यन्त इति भावः । अस्मिन्मते गौरवादुक्तं कस्यचिन्मत इति ॥ १६४ ॥ १६५ ॥ १६६ ॥

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसंगतमत आह–

**उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।**

उत्पन्न इति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥

**सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥१६७॥**

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्, इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह । सोऽयं क इति ॥ साजात्यमिति । तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः उक्तप्रतीतिविरोधात् । इत्थं च द्वयोरपि प्रतीत्योरभ्रमत्वमिति ॥ १६७ ॥

ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह—

**तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।**
**तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥१६८॥**

---

शब्दानां तत्प्रागभावादीनां च कल्पने गौरवादित्यर्थः ॥१६४॥१६५॥१६६॥

उक्तप्रतीतिविरोधादिति उत्पादविनाशप्रतीतिविरोधादित्यर्थः । इत्थञ्चेति प्रत्यभिज्ञानस्य सजातीयविषयत्वे चेत्यर्थः । द्वयोरपीति उत्पादप्रतीतिविनाशप्रतीत्योश्चेत्यर्थः ॥ १६७ ॥

तदेवेतीति । ननु तत्रापि व्यक्त्यभेद एव विषयोऽस्त्वतो भावार्थं प्रक-

इति श्रीविश्वनाथपञ्चाननकृतकारिकावली समाप्ता ॥

यदौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यसुतश्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥

॥ समाप्तश्चायं ग्रन्थः ॥



---

टयति यदौषधमित्यादिना तथाच विरुद्धधर्म्माहितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्वान्न तत्र व्यक्त्यभेदो विषयः किन्तु सजातीयाभेद एवेति भावः ॥ १६८ ॥

ॐ तत्सत् श्रीकृष्णाय परब्रह्मणे नमः

श्रीरस्तु शुभम्भवतु

॥ इति श्री पण्डितगोविन्दरामसूनुवंशीधरशर्म्मणा विरचितायां मुक्तावल्यन्वयार्थदीपिकायां गुणनिरूपणम् ॥

॥ समाप्ता चेयमन्वयार्थदीपिका ॥

॥ श्रीरस्तु ॥

श्री कृष्णार्पणमस्तु

---

